समर्पणम्

पूज्य चरणाना तपोमूर्तीनामनन्त श्री विभूषितााना

श्री १००८ करपात्री स्वामि पादाना

चरणसरोरुहयोस्सभक्तिश्रद्ध

ग्रन्थ प्रमूर्नामिद

समर्पयति



श्रीमययोध्या प्रसाद भार्गवस्य धर्मपत्नि

श्रीमती सुमित्रा देवी

# श्रीमहात्रिपुरसुन्दरीवरिवस्या

पूज्यचरणैः श्रीकरपात्रिस्वामिपादैः

विरचिता



विद्यावाचस्पतिना शास्त्ररत्नाकरेण विद्यासागरेण

**पं० पट्टाभिरामशास्त्रिणा सम्पादिता**

१९६२

# श्रीमहात्रिपुरसुन्दरीवरिवस्या

पूज्यपादैः श्रीकरपात्रिस्वामिचरणैः
विरचिता

विद्यावाचस्पतिना शास्त्ररत्नाकरेण विद्यासागरेण
पं० पट्टाभिरामशास्त्रिणा
सम्पादिता

श्रीमत्या सुमित्रादेव्या, श्रीमता अयोध्याप्रसादभार्गवेण च
प्रकाशिता
१९६२

# श्रीमहात्रिपुरसुन्दरीवरिवस्या

## विषय सूची

## परिशिष्टम्

# समर्पणम्

पूज्यचरणानां तपोमूर्तीनामनन्तश्रीविभूषितानां
श्री १००८ करपात्रिस्वामिपादानां
चरणसरोरुहयोस्सभक्तिश्रद्धं
ग्रन्थप्रसूनमिदं
समर्पयतः

श्री अयोध्याप्रसाद भार्गवः
श्रीमती सुमित्रादेवी च

।। श्रीः ।।

श्रीमहात्रिपुरसुन्दर्यै नमः

# यत् किंचित्

अथेदानीं श्रीमहात्रिपुरसुन्दरीसमाराधकानामुपकाराय 'श्रीमहात्रिपुरसुन्दरी वरिवस्या' नामको ग्रन्थस्सम्मुद्रय प्रकाश्यते। ग्रन्थोऽयं पूज्यचरणैस्तपोमूर्तिभिर्लोककल्याणैकतानमतिभिः श्रीकरपात्रिस्वामिश्रीचरणैर्विरचितः। प्राधान्येन परशुरामकल्पसूत्रमन्यांश्च श्रीविद्यार्णवादितन्त्रग्रन्थान् समालोच्य विरचितोऽयं ग्रन्थो देवीसम्पूजकानां महत उपकाराय कल्पेत इति सुदृढं विश्वसिमः। वेदाभिहितश्रौतस्मार्तकर्मणामनुष्ठानायोच्चावचं सूत्रग्रन्थेषु सत्स्वपि प्राचीनैर्महात्मभिर्यथा कल्पग्रन्था अनुष्ठानोपयोगितया विरचिताः, तथैव परशुरामादिभिर्विरचितेषु सत्स्वपि सूत्रग्रन्थेषु तन्त्रसम्बन्धिषु, प्रयोगावबोधकग्रन्थानामप्यावश्यकतां मन्वानाः श्रीचरणाः ग्रन्थमिमं विरचितवन्तः।

पवित्रतमेऽस्मिन् भारतवर्षे प्राचीनानामेष परमस्सिद्धान्त आसीत्––यत्सर्वे प्राणिनः देवा यक्षा गन्धर्वाः दैत्या असुरा मानवा वा परस्परमादानप्रदानेनैव लोकयात्रां कर्तुं प्रभवन्तीति। अतएव गीताचार्यो भगवान् पार्थसारथिः––'देवान् भावयताऽनेन ते देवा भावयन्तु वः। परस्परं भावयन्तः श्रेयः परस्परमवाप्स्यथ' इत्युपदिशति। अत्युदारचेतसोऽस्माकं प्राञ्चः तत्र तत्र स्मार्तेषु श्रौतेषु तान्त्रिकेषु च कर्मसु असुरराक्षसेभ्योऽपि हविःप्रदानाय व्यवस्थां विदधति। "लोकास्समस्तास्सुखिनो भवन्त्वि'ति तेषां मुख्यमुद्देश्यम्। लौकिकस्यालौकिकस्य वा दृष्टस्यादृष्टस्य वा ऐहिकस्यामुष्मिकस्य वा फलस्यावाप्तये तत्तद्वर्णाश्रमधर्मानुसारेणोच्चावचं कर्माणि ते प्रवर्तयाम्बभूबुः। मूलभूतान् वेदान् सुविमृश्य समालोच्य च तत्सारं ग्रन्थरूपेण प्रकाशयामासुः। तेषां ग्रन्थान्विलोक्येदं निश्चेतुं शक्यते यद्भारते कोऽप्यलसी न तिष्ठतु, सर्वोऽपि कर्मठो भूत्वा स्वस्वाभिलषितञ्च समवात्य सुखी भवत्विति। तत्रापि सातिशयस्य सुखस्यावाप्तये न तेषां प्राधान्येन प्रवृत्तिः, किन्तु निरतिशयस्य सुखस्यावाप्तये। संसारदशायां लोकाः सातिशयान्यैहिकानि दृष्टानि फलानि कामयन्त इति सहजोऽयं गुणः। तत्प्राप्तयेऽपि द्वाराण्यावश्यकान्येवेति प्राञ्चः विविधानुपायान् निर्दिष्टवन्तः।

तत्र प्रयोगानुष्ठानावसरे क्रियया सह शब्दस्य मन्त्ररूपस्य प्राधान्यं तैरवलम्बितम्। श्रौते स्मार्ते तान्त्रिके वा कर्मणि सर्वत्र मन्त्रस्य प्राधान्यम्। प्रकृतक्रियासंबन्धिपदार्थावबोधकत्वं यद्यस्ति मन्त्रस्य तर्हि न तत्र काचन विचिकित्सा, किन्तु

यत्र तथाविधार्थबोधकत्वं मन्त्रस्य नास्ति, तत्रापि तस्य प्राधान्यं निर्विचिकित्सं स्वीकर्तव्यं भवति। मन्त्रा हि प्राचां मननस्य फलभूताः। अतएव ते परम्पराप्राप्ता भवन्ति। वेदार्थतत्त्वविमर्शाग्रणीर्भगवान् जैमिनिः 'तच्चोदकेषु मन्त्राख्या इति सूत्रयन् विषयमिमं द्रढयति। मन्त्राश्च वैदिकाः स्मार्ता पौराणिकास्तन्त्रिकाश्चेति विविधा भवन्ति। सर्वेऽपीमेऽनादिसिद्धपरम्परयैव समधिगन्तव्या भवन्ति। परम्परापरिप्राप्तैर्मन्त्रैस्साध्यानि कर्माणि मनसो नियन्त्रणायैव विहितानि। शरीर धारणार्थमाहारः प्राचीनैरङ्गीकृतः, न त्वाहारार्थं शरीरधारणम्। एवमेव मन्त्राः कर्माणि च मनोनियन्त्रणार्थमाहाररूपाणि भवन्ति। मनोरूपे तत्त्वे नियन्त्रिते सति चक्षुरादीनीन्द्रियाणि सातिशयेभ्यः फलेभ्यो विमुखानि सन्ति निरतिशयं फलमवाप्तु मनुकूलानि भवेयुः। तदर्थं श्रौतानि स्मार्तानीव तान्त्रिकाणि कर्माणि प्रवृत्तानि। भगवत्या देव्यास्समाराधनाय प्रायस्सर्वं तन्त्रं प्रवृत्तम्।

तन्त्रशास्त्रमिदमतीव गहनम्। परम्परामात्रसुलभा अत्र पदार्था भवन्ति। भट्टपादाः श्रीकुमारिलाः भगवत्पादाः श्रीशङ्कराचार्याः अन्येऽपि प्राचीना आचार्यास्तन्त्रशास्त्रे प्रावीण्यमवाप्य स्वस्वाभिलषितं फलमवाप्नुवन्। पूज्यचरणाः श्रीकरपात्रिस्वामिपादा अपि तन्त्रमार्गेऽस्मिन् निष्णाताः यथायथं श्रीचक्राधिष्ठात्रीं भगवतीं समाराधयन्तो लोकानामुपकाराय पद्धतिग्रन्थमिमं प्रणीतवन्तः। अत्र श्रीक्रमः श्यामाक्रमः, दण्डिनीक्रमः, पराक्रमः इतीमे साङ्गाः निरूपिताः। परिशिष्टे च विविधा विषयाः परिज्ञानाय सन्निवेशिताः। देवीमानमपि सङ्कल्पादिषूपयुज्यमानं समावेशितम्। पूजकानामुपयुक्तास्सर्वेऽपि विषया अत्र संगृहीताः। श्रीचक्रम्, सामान्यविशेषार्घस्थापनप्रकारः, तदर्थं चित्राणि च पृथक्पृष्ठे सन्निवेशितानि पूजकानामुपकाराय।

ग्रन्थस्यास्य प्रकाशनाय श्रीमता अयोध्यानाथभार्गवमहोदयेन श्रीमत्या सुमित्रा देव्या च सर्वो भारस्स्वीकृत इति तयोस्सर्वविधश्रेयःप्राप्तये भगवतीं श्रीललिताम्बिकां प्रार्थये। यद्यपि ग्रन्थोऽयं मुद्रणाय वत्सरद्वयात्पूर्वमेवावाप्तम्, तथापि मदीयेनैव दोषेण महान्विलम्बस्समजनि। तदर्थं श्रीस्वामिचरणाम् भार्गवदम्पतीञ्च सविनयं प्रार्थये यन्ममायमपराधः क्षन्तव्य इति। मुद्रणावसरे मनुष्यमात्रसुलभा दोषा भवेयुरेव, तान् दूरीकृत्य यदि कश्चन गुणो भवेत्तर्हि तं परिगृह्य मामनुगृह्णीयुर्विद्वांस इति प्रार्थयते।

कलिकाता.
१.१.६२.

**——पट्टाभिरामशास्त्री**



माता मरकतश्यामा मातङ्गी मदशालिनी ।
कुर्यात् कटाक्षं कल्याणी कदम्बवनवासिनी ॥

श्रीः

तन्मध्ये तरुणार्काभं तप्तकाञ्चननिर्मितम्
शक्रादिमद्द्वारपालैस्सन्ततं परिवेष्टितम् ॥१॥
चतुष्षष्टिमहाविद्याकलाभिरभिसंवृतम् ।
रक्षितं योगिनीवृन्दै रत्नसिंहासनं भजे ॥२॥



श्रीचक्रम्

मध्ये तस्य मरुत्सेव्यं चतुर्द्वारसमुज्ज्वलम् ।
चतुरस्रत्रिरेखाढ्यं चारुत्रिवलयान्वितम् ॥३॥

कलादलसमायुक्तं कनदष्टदलान्वितम् ।
चतुर्दशारसहितं दशारद्वितयान्वितम् ॥४॥

अष्टकोणयुतं दिव्यमग्निकोणविराजितम् ।
योगिभिः पूजितं योगियोगिनीगणसेवितम् ॥५॥

सर्वदुःखप्रशमनं सर्वव्याधिविनाशनम् ।
विषज्वरहरं पुण्यं विविधापद्विदारणम् ॥६॥

सर्वदारिद्र्यशमनं सर्वभूपालमोहनम् ।
आशाभिपूरकं दिव्यमर्चकानामहर्निशम् ॥७॥

अष्टादशसुमर्माढ्यं चतुर्विंशतिसन्धिकम् ।
श्रीमद्बिन्दुगृहोपेतं श्रीचक्रं प्रणमाम्यहम् ॥८॥




१—यागमन्दिरद्वारम्



२—वर्धनीकलशस्थापनमण्डलम्



३—सामान्यार्घ्यस्थापनमण्डलम्




४—सामान्यार्घ्यपात्रम्



५—विशेषार्घ्यस्थापनमण्डलम्



६—अर्घ्यामृतपूजनम्




७–नित्यादेवीयजनम्



८/८A–गुरुमण्डलार्चनम्




९–प्रथमावरणम् १




प्रथमावरणम् २




प्रथमावरणम् ३




१०–द्वितीयावरणम्



११–तृतीयावरणम्



१२–चतुर्थावरणम्



१३–पञ्चमावरणम्



१४–षष्ठावरणम्



१५–सप्तमावरणम्




१६–अष्टमावरणम्




१७–पञ्चपञ्चिकायजनम्

॥ श्रीः ॥

श्रीमहात्रिपुरसुन्दर्यै नमः

# श्रीमहात्रिपुरसुन्दरीवरिवस्या

**सिन्दूरारुणविग्रहां त्रिनयनां माणिक्यमौलिस्फुर-**
**त्तारानायकशेखरां स्मितमुखीमापीनवक्षोरुहाम् ।**
**पाणिभ्यामलिपूर्णरत्नचषकं रत्नोत्पलं बिभ्रतीं**
**सौम्यां रत्नघटस्थरक्तचरणां ध्यायेत्परामम्बिकाम् ॥**

**अतिमधुरचापहस्ता-**
**मपरिमितामोदबाणसौभाग्याम् ।**
**अरुणामतिशयकरुणा-**
**मभिनवकुलसुन्दरीं वन्दे ॥**

इह सकलानर्थनिबर्हणपरमानन्दावाप्तिमूलप्रत्यक्चैतन्याभिन्नपरात्परब्रह्मात्मिकायाः पराम्बायास्सच्चित्सुखरूपायाः साक्षात्कृतावुपास्तौ च दीक्षाऽपेक्षिता—

**'दीयते ज्ञानमत्यन्तं क्षीयते पापसञ्चयः ।**
**यया दीक्षेति सम्प्रोक्ता परलोकप्रदायिनी' ॥**

इति दीक्षानिर्वचनात् ; 'मतिमान् दीक्षेत' इति परशुरामसूत्रात्, "आचार्यवान् पुरुषो वेद" इति श्रुतेश्च । दीक्षामन्तरा पुस्तकस्थान्मन्त्रान् दृष्ट्वा यो जपति, स प्रत्यवैति ।

**'पुस्तके लिखितान्मन्त्रान्दृष्ट्वा जपति यो नरः ।**
**स जीवन्नेव चाण्डालो मृतः श्वा चाभिजायते' ॥**

इति नित्योत्सवे ।

## दीक्षापद्धतिः

श्रीविद्यार्णवादिप्रोक्तशुभपुण्यतिथौ सद्गुरुं वृणुयात् । तत्र निर्वर्तितनित्यस्नानविधिस्साधको वाद्यघोषपुरस्सरं ब्राह्मणैः स्वस्ति

वाचयित्वा, आचम्य, प्राणानायम्य, देशकालौ संकीर्त्य श्रेयस्कामोऽहम् अमुकविद्याग्रहणार्थम्, अमुकगुरोर्दीक्षां ग्रहीष्य इति संकल्प्य समित्पाणिः सोपहारो गुरुमुपगच्छेत् । पुनश्च गुरोराज्ञया देशकालगोत्रनक्षत्रराश्याद्युच्चारणपूर्वकं भगवन्तं भवन्तं गुरुत्वेन वृण इति शिष्योक्तौ, गुरुर्वृतोऽस्मीत्युक्त्वा सशिष्यः सामयिकैस्सह गोमयेनोपलिप्तं पुष्पमालावितानाद्यलंकृतं मण्डपमासाद्य हस्तपादं प्रक्षाल्याचम्य मण्डपान्तः प्रविश्य वक्ष्यमाणविधिना आसने उपविश्य भूशुद्धिभूतशुद्धि-प्राणप्रतिष्ठाः कृत्वा गणपतिललिताश्यामावार्तालीपराणां सपर्यां विधाय शिष्यमाहूय नूतनेन वाससा तस्य मुखं बद्ध्वा गणपत्यादिमूलमन्त्रानुच्चारयन् सामान्यार्घोदकबिन्दुभिस्तमवोक्ष्य त्रैपुरं सिद्धान्तं श्रावयेत् ।

भूतानि, तन्मात्राणि, ज्ञानकर्मेन्द्रियाणि, अहंकारबुद्धिमनांसि, गुणसाम्यरूपा प्रकृतिः, शरीरकञ्चुकितश्शिवो जीवः, (परमशिवगताःस्वतन्त्रता-नित्यता-नित्यतृप्तता-सर्वकर्तृकता-सर्वज्ञताधर्मा एव संकुचितास्सन्तो जीवे) नियति-काल-राग-कला-विद्या-शब्दवाच्या भवन्ति । माया (जगत्परमशिवयोर्भेदबुद्धिः) शुद्धविद्या (तयोरभेदबुद्धिः) जगदिदन्तया पश्यन् परमशिव ईश्वरः, तदहन्तया पश्यन् सदाशिवः, शक्तिः परमशिवस्य जगत्सिसृक्षा, तद्वान् शिवः, षट्त्रिंशत्तत्त्वानि, स्वविमर्शः, पुरुषार्थः, वर्णसमुदायरूपा मन्त्रा नित्याः, (मूलाविद्यासमसत्ताका व्यावहारिकनित्याः) मन्त्राणामचिन्त्यशक्तित्वेन स्वगुरुपरम्परोपदेशैरगम्यधर्मरूपेण सम्प्रदायेन गुरुशास्त्रदेवतासु विश्वासेन सर्वास्सिद्धय आचार्योक्तरीत्या गुरुमन्त्रदेवतात्मनामैक्यं विभावयन् मनःपवनयोरेकयत्ननिरोद्धव्यत्वज्ञानाच्च प्रत्यगात्मवेदनम्, भावनादार्ढ्यान्निग्रहानुग्रहसिद्धिः । दर्शनान्तरानिन्दनेन स्वोपास्यनिष्ठया मन्त्रार्थानुसन्धानेन कामक्रोधनिन्दापरिवर्जनेन च सिद्धयो भवन्ति ।

वृत्तिभिर्वेद्यं सर्वं हविः, इन्द्रियाणि स्रुचः, संकोचेन स्वात्मस्थितास्सर्वज्ञत्वसर्वकर्तृत्वादयः परमशिवशक्तय एव ज्वालाः, स्वात्मशिव एव पावकः, स्वयमेव होता, निर्गुणब्रह्मापरोक्ष्यं फलम्, स्वपारमार्थिकस्वरूपलाभान्न परमिति सारः ।

## शाम्भवी दीक्षा

गुरुः शिष्यस्य शिरसि रक्तशुक्लचरणं कामेश्वरीकामेश्वरयोर्भावयित्वा तदमृतक्षालितं सर्वशरीरमलंकुर्यात् ।

## शाक्ती दीक्षा

ततस्तस्यामूलमाब्रह्मबिलं प्रज्वलन्तीं बिसतन्तुतनीयसीं विद्युत्पुञ्जपिञ्जरां विवस्वदयुतभास्वत्प्रकाशां चन्द्रकोटिसुशीतलां ज्वलदनलनिभां परां संविदं ध्यात्वा तद्रश्मिभिः पापान् दहेत् ।

त्रिकटु-त्रिफला-चतुर्जात-कंकोल-मदयन्ती-सहदेवी-दूर्वा-भस्ममृत्तिका - चन्दन - कुंकुम- रोचना - कर्पूरवासितजलपूर्णवस्त्रयुगलवेष्टितं नूतनकलशं बालाषडङ्गेनाभ्यर्च्य श्रीश्यामावार्तालीचक्राणि निःक्षिप्य तिसृणामावरणमन्त्रैरभ्यर्च्य संरक्ष्यास्त्रेण प्रदर्श्य धेनुयोनी, त्रिकटु-पिप्पली-शुण्ठी-मरीचि-त्रिफला-हरीतकी-धात्री - बिभीतक-चतुर्जातोशीरैला-लवङ्ग-नागकेसराणि आग्नेयादिविदिक्षु मध्ये प्रागादिदिक्षु च शालितण्डुलपुञ्जोपरि स्थापितेषु कलशेषु तच्चूर्णं निःक्षिपेत् ।

ततः सक्षीरेण सिन्दूरकुंकुमादिना चन्दनपीठे मातृकायन्त्रं विलिख्य तत्र शिष्यं निवेश्य तेन कुम्भाम्भसा ललितादिमूलविद्याभिः स्नपयेत् । मातृकायन्त्रप्रकारश्चेत्थम्——चतुरस्रालंकृतं सकेसरमष्टदलकमलं विलिख्य तत्कर्णिकायां हकारसकारौकारविसर्गात्मकं बीजं तत्केसरेषु प्राच्यादितोऽकारादिस्वरद्वन्द्वं दलोदरेषु क च ट त प य श लाख्यवर्गाष्टकं चतुरस्रस्य बाह्यतः प्रागादिदिक्षु वकारम् आग्नेयादिदिक्षु ठ वर्णञ्च लिखेत् । सर्वेषामक्षराणां सबिन्दुकत्वं सम्प्रदायात् ।

ततः परिहितदुकूलं सुरभिलचन्दनानुलिप्ताङ्गं मल्लिकादिमाल्यधारिणम्, सुप्रसन्नं शिष्यं पार्श्वे निवेश्य तदङ्गे मातृकान्यासं विधाय विमुक्तमुखबन्धवाससस्तस्य हस्ते क्रमात् त्रीन् चन्दनोक्षितान् पुष्पखण्डान् विनिक्षिप्य तत्त्वमन्त्रैः ग्रासयित्वा गुरुर्दक्षिणकर्णे श्रीविद्यागुरुपादुकामन्त्रमुपदिश्य बालामुपदिशेत् ।

ततस्तस्य शिरसि स्वचरणं निःक्षिप्य सर्वान् मन्त्रान् सकृद्वा क्रमेण वा यथाधिकारमुपदिश्य स्वाङ्गेषु किमप्यङ्गं शिष्यं स्पर्शयित्वा तदङ्ग-

मातृकावर्णादिद्व्यक्षरं त्र्यक्षरं चतुरक्षरं वा आनन्दनाथशब्दान्तं तस्य नाम दिशेत्। ततस्समयाचारानुशासनं शास्त्राज्ञापालनञ्च।

श्लेष्मातक-करञ्जा-क्ष-निम्बा-श्वत्थ-कदम्ब-बिल्व-वटो-दुम्बर-तिन्तिणी-कुकवृक्षच्छेदनवर्जनम्, स्त्रीवृन्द-क्षीरकलश-सिद्धलिङ्ग-विविधक्रीडाकुलकुमारी-कुल-सहकारा-शोकतरु-पितृवन-मत्तवाराङ्गना-रक्तांशुका-मत्तेभान् दृष्ट्वा वन्देत्। कृष्णाष्टमी-कृष्णचतुर्दशी-दर्श-पूर्णमास-संक्रमणपर्वसु नैमित्तिकी वरिवस्या कर्तव्या। गुरुपरम-गुर्वादीन् आदरेण पश्येत्, शरीरस्यार्थस्यासूनाञ्च गुर्वर्थं धारणम्, तद्वचसि युक्तायुक्ताविचारणम्, सर्वत्र शास्त्रव्यवस्थापालनम्, परनिन्दा-त्मस्तुत्योश्च वर्जनम्, सर्वप्रयत्नेन परदेवताराधनद्वारा ब्रह्मभावा-भिलाषः-इत्थं विदित्वानुतिष्ठन् कृतकृत्यो जीवन्मुक्तो भवति।

ततो गुरुर्देहेन्द्रियादिविलक्षणाम् अवस्थात्रयसाक्षिसच्चिदात्मकं प्रत्यगभिन्नं ब्रह्मैव त्वमसि इति शिष्याय परमात्मतत्त्वमुपदिश्य ललिता-श्यामा-वार्तालीविद्याभिः तदङ्गं त्रिः परिमृज्य परिरभ्य तं मूर्ध्न्युपाघ्राय स्वमिव शिष्यमपि परचिद्रूपं कुर्यात्। शिष्योऽपि तथैव क्षणमात्मानं भावयित्वा कृतार्थस्सन् यथाविभवं श्रीगुरुमाराध्य तस्माद्विदित-वेदितव्योऽशेषमन्त्राधिकारी भवेत्।

अनेनैवैकस्मिन्नेव काले समुचितेनान्यतमेन कालभेदाद्दीक्षावि-धिना गणपति श्री-श्यामा-परा-वार्तालीनाँ क्रमानुष्टानं न तु पृथक्पृथक् दीक्षणम्। गणपतेर्ललितायाश्च क्रमं निर्वर्त्य उभयोरेव पात्राण्यासाद्य चक्रराजमात्रं कलशे निक्षिप्य श्रीविद्यया केवलं शिष्यं स्नपयित्वा तदङ्गञ्च परिमृज्य शेषमशेषञ्चानुतिष्ठेत्। गणपतिश्यामादीनां स्वातन्त्र्येणैकैकशः तत्तत्क्रमं प्रवर्त्य तत्तत्पात्रे आसाद्य तत्त-द्यन्त्रं कुम्भे निःक्षिप्य तत्तन्मन्त्रदीक्षां कुर्यात्। दीक्षायां त्रैवर्णिकस्यै-वाधिकारः। शक्तीनान्तु-ओघत्रयान्तर्गतगुरुमण्डलान्तर्दर्शनज्ञापकबला-दस्त्येवाधिकारः।

### गणपतिक्रमः

तत्र काल्पकृत्याह्निकयोर्विशेषो यथा—श्रीपादुकायामादौ त्रितार्यु-त्तरं बाला वाक् ग्लौमिति पञ्च-बीजयोजनम्।

ओं श्रीं ह्रीं ऐं क्लीं सौः ऐं ग्लौं ह्स्ख्फ्रें हसक्षमलवरयूं सहक्षमलवरयीं ह्सौः स्हौः श्रीगुरुपादुकां पूजयामि ।

हृदयकमलकर्णिकायामुद्यदरुणकोटिपाटलस्य देवस्य करटिवदनस्य ध्यानेन परिप्लुष्टनिःशेषदोषत्वमात्मनः तत्प्रभारुणतनुत्वभावनञ्च रश्मिमालानुस्मरणम् सवितृमण्डले देवस्य ध्यानम् ।

'तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि तन्नो दन्ती प्रचोदयात्' इति मन्त्रेण त्रिरर्घ्यदानम् ।

ततो देशकालादिकं संकीर्त्य महागणपतिप्रसादसिद्धये चतुरावृत्तितर्पणं करिष्य इति संकल्प्य नद्यादौ हस्तमात्रं चतुरस्रमण्डलं परिगृह्य,

**'ब्रह्माण्डोदरतीर्थानि करैस्स्पृष्टानि ते रवे ।**
**तेन स्नेहेन मे देव तीर्थं देहि दिवाकर' ।।**

इतिमन्त्रेण सूर्यमभ्यर्च्य,

**'आवाहयामि त्वां देवि तर्पणायेह सुन्दरि ।**
**एहि गङ्गे नमस्तुभ्यं सर्वतीर्थसमन्विते' ।।**

इति गङ्गां प्रार्थ्य, ह्वां ह्वीं ह्वूं ह्वैं ह्वौं ह्वः इत्युच्चार्य, क्रों इत्यंकुशमुद्रया गङ्गादितीर्थान्यावाह्य वं इत्यमृतबीजेन सप्तवारमभिमन्त्र्य, ततश्चतुरस्राष्टदलषट्कोणत्रिकोणात्मकमहागणपतियन्त्रं विचिन्त्य, स्वदेहे ऋष्यादीन् न्यस्य यन्त्रे सावरणं देवमावाह्य श्रीं ह्रीं क्लीं महागणपतये लं पृथिव्यात्मकं गन्धं परिकल्पयामि नमः, श्रीं ह्रीं क्लीं महागणतये हं आकाशात्मकं पुष्पं समर्पयामि नमः, श्रीं ह्रीं क्लीं महागणपतये यं वाय्वात्मकं धूपमाघ्रापयामि नमः, श्रीं ह्रीं क्लीं महागणपतये रं वन्ह्यात्मकं दीपं सन्दर्शयामि नमः, श्रीं ह्रीं क्लीं महागणपतये वं अमृतात्मकं नैवेद्यं निवेदयामि नमः, श्रीं ह्रीं क्लीं महागणपतये सं सर्वात्मकं ताम्बूलं कल्पयामि नमः इति पञ्चोपचारैरर्चयेत् ।

## तर्पणम्

प्रथमं प्रत्यावृत्ति मूलमन्त्रान्ते महागणपतिं तर्पयामि इति द्वादशवारं तर्पयित्वा ततः स्वाहान्तेन मूलमन्त्रस्यैकैकेन वर्णेन चतुश्चतुर्वारं

प्रतिवर्णान्तमावृत्तेन च मूलमन्त्रेण तर्पयेत्। अर्थात्––चतुश्चतुर्वारं देवं, त्रयोदशसु मिथुनेषु श्री श्रीपत्यादिषु एकैकां देवतां द्वितीयान्तेन तत्तन्नाम्ना चतुश्चतुर्वारं प्रतिदेवतमावृत्तेन च मूलमन्त्रेण देवं चतुश्चतुर्वारं तर्पयेत्। यथा––

'ओं श्रीं ह्रीं क्लीं ग्लौं गं गणपतये वरवरद सर्वजनं मे वशमानय स्वाहा महागणपतिं तर्पयामि।' द्वादशवारम्।

ओं स्वाहा महागणपतिं तर्पयामि। चतुर्वारम्।

मूलमन्त्रेण––महागणपतिं तर्पयामि। चतुर्वारम्।

| | | | | |
|---|---|---|---|---|
| ३ | श्रीं स्वाहा | महागणपतिं | तर्पयामि। | चतुर्वारम्। |
| | मूलेन–– | ,, | ,, | ,, |
| ३ | ह्रीं स्वाहा | ,, | ,, | ,, |
| | मूलेन–– | ,, | ,, | ,, |
| ३ | क्लीं स्वाहा | ,, | ,, | ,, |
| | मूलेन–– | ,, | ,, | ,, |
| ३ | ग्लौं स्वाहा | ,, | ,, | ,, |
| | मूलेन–– | ,, | ,, | ,, |
| ३ | गं स्वाहा | ,, | ,, | ,, |
| | मूलेन–– | ,, | ,, | ,, |
| ३ | गं स्वाहा | ,, | ,, | ,, |
| | मूलेन–– | ,, | ,, | ,, |
| ३ | णं स्वाहा | ,, | ,, | ,, |
| | मूलेन–– | ,, | ,, | ,, |
| ३ | पं स्वाहा | ,, | ,, | ,, |
| | मूलेन– | ,, | ,, | ,, |
| ३ | तं स्वाहा | ,, | ,, | ,, |
| | मूलेन–– | ,, | ,, | ,, |
| ३ | यें स्वाहा | ,, | ,, | ,, |
| | मूलेन–– | ,, | ,, | ,, |
| ३ | वं स्वाहा | ,, | ,, | ,, |

| | | | | |
|---|---|---|---|---|
| | मूलेन—— | महागणपतिं | तर्पयामि । | चतुर्वारम् । |
| ३ | रं स्वाहा | ,, | ,, | ,, |
| | मूलेन—— | ,, | ,, | ,, |
| ३ | वं स्वाहा | ,, | ,, | ,, |
| | मूलेन—— | ,, | ,, | ,, |
| ३ | रं स्वाहा | ,, | ,, | ,, |
| | मूलेन—— | ,, | ,, | ,, |
| ३ | दं स्वाहा | ,, | ,, | ,, |
| | मूलेन—— | ,, | ,, | ,, |
| ३ | सं स्वाहा | ,, | ,, | ,, |
| | मूलेन—— | ,, | ,, | ,, |
| ३ | वं स्वाहा | ,, | ,, | ,, |
| | मूलेन—— | ,, | ,, | ,, |
| ३ | जं स्वाहा | ,, | ,, | ,, |
| | मूलेन—— | ,, | ,, | ,, |
| ३—— | नं स्वाहा | ,, | ,, | ,, |
| | मूलेन—— | ,, | ,, | ,, |
| ३ | मं स्वाहा | ,, | ,, | ,, |
| | मूलेन—— | ,, | ,, | ,, |
| ३ | वं स्वाहा | ,, | ,, | ,, |
| | मूलेन—— | ,, | ,, | ,, |
| ३ | शं स्वाहा | ,, | ,, | ,, |
| | मूलेन—— | ,, | ,, | ,, |
| ३ | मां स्वाहा | ,, | ,, | ,, |
| | मूलेन—— | ,, | ,, | ,, |
| ३ | नं स्वाहा | ,, | ,, | ,, |
| | मूलेन—— | ,, | ,, | ,, |
| ३ | यं स्वाहा | ,, | ,, | ,, |
| | मूलेन—— | ,, | ,, | ,, |

| ३ | स्वां स्वाहा | महागणपतिं | तर्पयामि। | चतुर्वारम्। |
|---|---|---|---|---|
| | मूलेन—— | ,, | ,, | ,, |
| ३ | हां स्वाहा | ,, | ,, | ,, |
| | मूलेन—— | ,, | ,, | ,, |
| ३ | श्रियं स्वाहा | ,, | ,, | ,, |
| | मूलेन—— | ,, | ,, | ,, |
| ३ | श्रीपतिं स्वाहा | ,, | ,, | ,, |
| | मूलेन—— | ,, | ,, | ,, |
| ३ | गिरिजां स्वाहा | ,, | ,, | ,, |
| | मूलेन—— | ,, | ,, | ,, |
| ३ | गिरिजापतिं स्वाहा | ,, | ,, | ,, |
| | मूलेन—— | ,, | ,, | ,, |
| ३ | रतिं स्वाहा | ,, | ,, | ,, |
| | मूलेन—— | ,, | ,, | ,, |
| ३ | रतिपतिं स्वाहा | ,, | ,, | ,, |
| | मूलेन—— | ,, | ,, | ,, |
| ३ | महीं स्वाहा | ,, | ,, | ,, |
| | मूलेन—— | ,, | ,, | ,, |
| ३ | महीपतिं स्वाहा | ,, | ,, | ,, |
| | मूलेन—— | ,, | ,, | ,, |
| ३ | महालक्ष्मीं स्वाहा | ,, | ,, | ,, |
| | मूलेन—— | ,, | ,, | ,, |
| ३ | महागणपतिं स्वाहा | ,, | ,, | ,, |
| | मूलेन—— | ,, | ,, | ,, |
| ३ | ऋद्धिं स्वाहा | ,, | ,, | ,, |
| | मूलेन—— | ,, | ,, | ,, |
| ३ | आमोदं स्वाहा | ,, | ,, | ,, |
| | मूलेन—— | ,, | ,, | ,, |
| ३ | समृद्धिं स्वाहा | ,, | ,, | ,, |

| | | | | |
|---|---|---|---|---|
| | मूलेन— | महागणपतिं | तर्पयामि । | चतुर्वारम् । |
| ३ | प्रमोदं स्वाहा | " | " | " |
| | मूलेन— | " | " | " |
| ३ | कान्ति स्वाहा | " | " | " |
| | मूलेन— | " | " | " |
| ३ | सुमुखं स्वाहा | " | " | " |
| | मूलेन— | " | " | " |
| ३ | मपनावतीं स्वाहा | " | " | " |
| | मूलेन— | " | " | " |
| ३ | दुर्मुखं स्वाहा | " | " | " |
| | मूलेन— | " | " | " |
| ३ | मदद्रवां स्वाहा | " | " | " |
| | मूलेन— | " | " | " |
| ३ | अविघ्नं स्वाहा | " | " | " |
| | मूलेन— | " | " | " |
| ३ | द्राविणीं स्वाहा | " | " | " |
| | मूलेन— | " | " | " |
| ३ | विघ्नकर्तारं स्वाहा | " | " | " |
| | मूलेन— | " | " | " |
| ३ | वसुधरां स्वाहा | " | " | " |
| | मूलेन— | " | " | " |
| ३ | शंखनिधि स्वाहा | " | " | " |
| | मूलेन— | " | " | " |
| ३ | वसुमतीं स्वाहा | " | " | " |
| | मूलेन— | " | " | " |
| ३ | पद्मनिधि स्वाहा | " | " | " |
| | मूलेन— | " | " | " |

इत्याहत्य तर्पणसंख्या चतुश्चत्वारिंशदुत्तरचतुश्शती ४४४ भवति। अथ पुनर्मूलेन देवमुक्तया रीत्या पञ्चधा उपचर्यात्मन्युद्वसयेत्। इति चतुरावत्तितर्पणविधिः

## यागमन्दिरागमनादिविघ्नोत्सारणान्तम्

यागगृहमागत्य स्थण्डिलं गोमयेनोपलिप्य यागमन्दिरञ्च रङ्गवल्लीपुष्पमालिकावितानादिभिरलंकृत्य द्वारस्य दक्षवामभागयोरूर्ध्वभागे च क्रमेण—

श्रीं ह्रीं क्लीं भद्रकाल्यै नमः　　(दक्षशाखायाम्)
श्रीं ह्रीं क्लीं भैरवाय नमः　　(वामशाखायाम्)
श्रीं ह्रीं क्लीं लम्बोदराय नमः　　(ऊर्ध्वशाखायाम्)

इति तिस्रो द्वारदेवतास्सम्पूज्यान्तःप्रविष्टः सपर्यासामग्रीं दक्षभागे निधाय, दीपानभितः प्रज्वाल्य दीपौ वा, गन्धादिभिः कृतात्मालंकारः ताम्बूलेन जातीपत्रपूगीफललवङ्गैलाकर्पूराख्यपञ्चतिक्तेन वा सुरभिलवदनः स्वास्तीर्णे ऊर्णामृदुनि शुचिनि बालातृतीयबीजेन द्वादशवारमभिमन्त्रिते मूलमन्त्रोक्षिते आसने श्रीं ह्रीं क्लीं आधारशक्तिकमलासनाय नम इति प्राङ्मुख उदङ्मुखो वा पद्मासनाद्यन्यतमेनासनेनोपविश्य श्रीं ह्रीं क्लीं रक्तद्वादशशक्तियुक्ताय दीपनाथाय नम इति पुष्पाञ्जलिना भूमौ दीपनाथमिष्ट्वा श्रीं ह्रीं क्लीं समस्तगुप्तप्रकटसिद्धयोगिनीचक्रश्रीपादुकाभ्यो नम इति मूर्धनि बद्धाञ्जलिः स्ववामदक्षपार्श्वयोः क्रमेण श्रीगुरुपादुकां गुरुं, मूलेन च देवं प्रणम्य स्वस्य तदैक्यं भावयन् श्रीं ह्रीं क्लीं—अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः।
ये भूता विश्वकर्तारस्ते नश्यन्तु शिवाज्ञया ॥

इति मन्त्रं सकृदुच्चार्य युगपद्वामपार्ष्णिना भूतलं त्रिरास्फोटयन् क्रूरदृष्ट्यवलोकनपूर्वकतालत्रयेण भौमान्तरिक्षदिव्यान् भेदावभासकान् विघ्नानुत्सारयेत्।

तालत्रयं नाम—दक्षतर्जनीमध्यमाभ्यामधोमुखाभ्यां वामकरतले सशब्दमुपर्युपरि त्रिरभिघातः।

## शिखाबन्धनादिमातृकान्यासान्तम्

नम इत्यङ्गुष्ठमन्त्रमुच्चार्याङ्कुशेन शिखां बध्वा श्रीक्रमे वक्ष्यमाणप्रकारेण भूतशुद्धिमात्मनः प्राणप्रतिष्ठाञ्च विधाय विंशतिधा षोडशधा दशधा सप्तधा त्रिधा वा मूलेन प्राणानायम्य तेजोरूपदेवानन्यमात्मा-

भावयन् 'ऐं छः अस्त्राय फट्' इति मन्त्रेण मुहुरावृत्तेनाङ्गुष्ठादिकरत-लान्तं मातृकान्यासं विदध्यात्। तत्र च श्रीं ह्रीं क्लीं इति त्रिबीजं प्रथमं योजयेदिति विशेषः।

## षडङ्गन्यासाः

श्रीं ह्रीं क्लीं ओं गां अंगुष्ठाभ्यां हृदयाय नमः
,, ,, ,, श्रीं गीं तर्जनीभ्यां शिरसे स्वाहा
,, ,, ,, ह्रीं गूं मध्यमाभ्यां शिखायै वषट्
,, ,, ,, क्लीं गैं अनामिकाभ्यां कवचाय हुम्
,, ,, ,, ग्लौं गौं कनिष्ठिकाभ्यां नेत्रत्रयाय वौषट्
,, ,, ,, गं गः करतलकरपृष्ठाभ्यां अस्त्राय फट्॥

इति षडङ्गमन्त्रानङ्गुष्ठादिषु हृदयादिषु च न्यस्य मूलेन त्रिर्व्यापकं कुर्यात्।

## ध्यानम्

ततो ध्यानम्—

**ततो हृदब्जे शोणाङ्गं वामोत्सङ्गविभूषया।**
**सिद्धलक्ष्म्या समाश्लिष्टपार्श्वमर्धेन्दुशेखरम्॥**
**वामाधःकरतो दक्षाधःकरान्तेषु पुष्करे।**
**परिष्कृतं मातुलुङ्गगदापुण्ड्रेक्षुकार्मुकैः॥**
**शूलेन शङ्खचक्राभ्यां पाशोत्पलयुगेन च।**
**शालिमञ्जरिकास्वीयदन्ताञ्चलमणीघटैः॥**
**स्रवन्मदञ्च सानन्दं श्रीश्रीपत्यादिसंवृतम्।**
**अशेषविघ्नविध्वंसनिघ्नं विघ्नेश्वरं स्मरेत्॥**

## अर्घ्यसंस्कारः

अथ तं मानसैः पञ्चोपचारैरभ्यर्च्य श्रीक्रमे वक्ष्यमाणेन क्रमेण सामान्यविशेषार्घ्ये आसादयेत्। तत्र चोभयोरर्घ्ययोरप्युक्तं षडङ्गम् आधारस्थापनादिषु क्रमेण—

श्रीं ह्रीं क्लीं अं अग्निमण्डलाय दशकलात्मने अर्घ्यपात्राधाराय नमः
३ उं सूर्यमण्डलाय द्वादशकलात्मने अर्घ्यपात्राय नमः
३ मं सोममण्डलाय षोडशकलात्मने अर्घ्यामृताय नमः
इत्येव मन्त्राः ।

"गणपतिं हवामहे कविं कवीनामुपमश्रवस्तमम् । ज्येष्ठरा
ब्रह्मणां ब्रह्मणस्पत आनः श्रृण्वन्नूतिभिः सीद सादनम्"

इत्यनयर्चा चाभिमन्त्रणम्, चतुर्नवतिमन्त्राद्यभिमन्त्रणाभावश्चे
विशेषः । अथ सामान्यार्घ्यजलबिन्दुभिरात्मानं पूजोपकरणानि
सम्प्रोक्ष्य विशेषार्घ्यजलबिन्दुभिस्स्वशिरसि गुरुपादुकां त्रिरिष्ट्व
सपर्यासामग्रीं पावयेत् ।

## पीठे प्राणप्रतिष्ठा

पुरतो रक्तचन्दनादिभिर्निर्मिते पीठे कलधौतादिविरचितां मह
गणपतिप्रतिमां ध्यानोक्तरूपां, चतुरस्राष्टदलषडरत्रिकोणात्मकं सिन्द
रादिना लिखितं लेखितं वा यन्त्रं धातुमयं वा निवेश्य—

'श्रीगणेशयन्त्रस्य प्राणा इह प्राणाः, श्रीगणेशयन्त्रस्य जीव इ
स्थितः, श्रीगणेशयन्त्रस्य सर्वेन्द्रियाणि श्रीगणेशयन्त्रस्य वाङ्मन आद
इह आयान्तु स्वाहा' इति मन्त्रेण प्राणप्रतिष्ठां कुर्यात् ।

## पीठशक्तिपूजा

तस्य त्रिकोणे स्वाग्रादिप्रादक्षिण्येन परितो मध्ये च क्रमेण—

श्रीं ह्रीं क्लीं तीव्रायै नमः
३ ज्वालिन्यै नमः
३ नन्दायै नमः
३ भोगदायै नमः
३ कामरूपिण्यै नमः
३ उग्रायै नमः
३ तेजोवत्यै नमः
३ सत्यायै नमः
३ विघ्ननाशिन्यै नमः

इति नवगणेशशक्तीरभ्यर्च्य, धर्माद्यष्टकपूजां कुर्यात्।

तत्रैवाग्नेयादिविदिक्षु प्रागाद्यासु च दिक्षु क्रमेण—

श्रीं ह्रीं क्लीं ॠं धर्माय नमः
३ ॠं ज्ञानाय नमः
३ ॣं वैराग्याय नमः
३ ॣं ऐश्वर्याय नमः
३ ॠं अधर्माय नमः
३ ॠं अज्ञानाय नमः
३ ॣं अवैराग्याय नमः
३ ॣं अनैश्वर्याय नमः

इति चार्चयेत्।

## महागणपतिपूजा

ततो मनसा ध्यातं महागणपतिं भक्तानुग्रहात्तेजोरूपेण परिणतं प्रापय्य ब्रह्मरन्ध्रं वहन्नासापुटाध्वना निर्गमय्य कुसुमगर्भितेऽञ्जलौ मूर्तिं मूलमन्त्रान्ते महागणपतिमावाहयामीति त्रिकोणे आवाह्य 'आवाहितो भव' इत्यादिक्रमेण श्रीक्रमे वक्ष्यमाणतत्तन्मुद्राप्रदर्शनपूर्वकम्-आवाहन-संस्थापन-सन्निधापन-सन्निरोधन - सम्मुखीकरणावगुण्ठनादि-कृत्वा वन्दनधेनुयोनिमुद्राश्च प्रदर्श्य सामान्यार्घ्योदकेन प्राग्वत् गन्धादि पञ्चोपचारानाचरेत्।

## महागणपतितर्पणम्

ततो मूलान्ते श्रीमहागणपतिश्रीपादुकां पूजयामीति वामकर-तलमुद्रया सन्दष्टद्वितीयशकलगृहीतक्षीरबिन्दुदक्षकरोपात्तकुसुम-युगलक्षेपेण देवं दशवारमुत्तर्पयेत्। तत्त्वमुद्रा उत्तरत्रापि साधारणी।

## षडङ्गपूजा

ततो देवस्य वाय्वीशानाग्नेयासुरकोणेषु मध्ये प्रागादिदिक्षु च क्रमेण—

श्रीं ह्रीं क्लीं ओं गां हृदयाय नमः हृदयशक्तिश्रीपादुकां पूजयामि,
३ श्रीं गीं शिरसे स्वाहा शिरश्शक्तिश्रीपादुकां पूजयामि,
३ ह्रीं गूं शिखायै वषट् शिखाशक्तिश्रीपादुकां पूजयामि,
३ क्लीं गैं कवचाय हुम् कवचशक्तिश्रीपादुकां पूजयामि,
३ ग्लौंगौंनेत्रत्रयायवौषट्नेत्रत्रयशक्तिश्रीपादुकांपूजयामि
३ गं गः अस्त्राय फट् अस्त्रशक्तिश्रीपादुकां पूजयामि,

इति समभ्यर्च्याथ ओघत्रयपूजां कुर्यात् ।

## दिव्यौघः

श्रीं ह्रीं क्लीं विनायकसिद्धाचार्य श्रीपादुकां पूजयामि ।
३ कवीश्वरसिद्धाचार्य ,, ,,
३ विरूपाक्षसिद्धाचार्य ,, ,,
३ विश्वसिद्धाचार्य ,, ,,
३ ब्रह्मण्यसिद्धाचार्य ,, ,,
३ निधीशसिद्धाचार्य ,, ,,

## सिद्धौघः

३ गजाधिराजसिद्धाचार्य ,, ,,
३ वरप्रदसिद्धाचार्य ,, ,,

## मानवौघः

३ विजयसिद्धाचार्य ,, ,,
३ दुर्जयसिद्धाचार्य ,, ,,
३ जयसिद्धाचार्य ,, ,,
३ दुःखारिसिद्धाचार्य ,, ,,
३ सुखावहसिद्धाचार्य ,, ,,
३ परमात्मसिद्धाचार्य ,, ,,
३ सर्वभूतात्मसिद्धाचार्य ,, ,,
३ महानन्दसिद्धाचार्य ,, ,,
३ फालचन्द्रसिद्धाचार्य ,, ,,

| | | | |
|---|---|---|---|
| ३ | सद्योजातसिद्धाचार्य | श्रीपादुकां | पूजयामि । |
| ३ | बुद्धसिद्धाचार्य | ,, | ,, |
| ३ | शूरसिद्धाचार्य | ,, | ,, |

इत्योघत्रयपूजा । अत्रैव पाठान्तराणि--

### दिव्यौघः

| | | | |
|---|---|---|---|
| श्रीं ह्रीं क्लीं | विनायकसिद्धाचार्य | श्रीपादुकां | पूजयामि । |
| ३ | विरूपाक्षसिद्धाचार्य | ,, | ,, |
| ३ | बुद्धसिद्धाचार्य | ,, | ,, |
| ३ | शूरसिद्धाचार्य | ,, | ,, |
| ३ | वरप्रदसिद्धाचार्य | ,, | ,, |

### सिद्धौघः

| | | | |
|---|---|---|---|
| ३ | विजयसिद्धाचार्य | ,, | ,, |
| ३ | दुर्जयसिद्धाचार्य | ,, | ,, |
| ३ | जयसिद्धाचार्य | ,, | ,, |
| ३ | कवीश्वरसिद्धाचार्य | ,, | ,, |
| ३ | ब्रह्मण्यसिद्धाचार्य | ,, | ,, |
| ३ | निधीशसिद्धाचार्य | ,, | ,, |

### मानवौघः

| | | | |
|---|---|---|---|
| ३ | गजाधिराजसिद्धाचार्य | ,, | ,, |
| ३ | दुःखारिसिद्धाचार्य | ,, | ,, |
| ३ | सद्योजातसिद्धाचार्य | ,, | ,, |
| ३ | सुखावहसिद्धाचार्य | ,, | ,, |
| ३ | परमात्मसिद्धाचार्य | ,, | ,, |
| ३ | सर्वभूतात्मसिद्धाचार्य | ,, | ,, |
| ३ | महानन्दसिद्धाचार्य | ,, | ,, |
| ३ | शुभानन्दसिद्धाचार्य | ,, | ,, |
| ३ | फालचन्द्रसिद्धाचार्य | ,, | ,, |

ओघत्रयसंख्या विंशतिः ।

## आवरणार्चनम् । तत्र प्रथमावरणम्

त्र्यश्रषडश्रयोरन्तरान्ते प्रागादिदिक्षु क्रमेण पूजयेत्—

श्रीं ह्रीं क्लीं श्रीश्रीपतिपादुकां पूजयामि ।
३ गिरिजागिरिजापतिश्रीपादुकां पूजयामि ।
३ रतिरतिपति " "
३ महीमहीपति " "

## द्वितीयावरणम्

षडश्रे देवाग्रकोणमारभ्य प्रादक्षिण्येन तद्दक्षवामपार्श्वयोश्च क्रमेण —

श्रीं ह्रीं क्लीं ऋध्यामोद श्रीपादुकां पूजयामि ।
३ समृद्धिप्रमोद " "
३ कान्तिसुमुख " "
३ मदनावतीदुर्मुख " "
३ मदद्रवविघ्न " "
३ द्राविणीविघ्नकर्तृ " "
३ वसुधाराशङ्खनिधि " "
३ वसुमतीपद्मनिधि " "

## तृतीयावरणम्

षडश्रसन्धिषट्के प्राग्वत् षडङ्गदेवतार्चनम् ।

## चतुर्थावरणम्

अष्टदले पश्चिमादिदिक्षु वायव्यादिविदुक्षु च प्रादक्षिण्यक्रमेण—

श्रीं ह्रीं क्लीं आं ब्राह्मी श्रीपादुकां पुजयामि ।
३ ईं माहेश्वरी " "
३ ऊँ कौमारी " "
३ ऋं वैष्णवी " "
३ लृं वाराही " "
३ ऐं माहेन्द्री " "

३ श्रौं चामुण्डा श्रीपादुकां पूजयामि ।
३ श्रः महालक्ष्मी ,, ,,

## पञ्चमावरणम्

अथ चतुरश्रस्य रेखायां प्रागाद्यास्वष्टसु दिक्षु क्रमेण—
श्रीं ह्रीं क्लीं लां इन्द्राय वज्रहस्ताय सुराधिपतये ऐरावतवाहनाय सपरिवाराय नमः ।
३ रां अग्नये शक्तिहस्ताय तेजोऽधिपतये अजवाहनाय
३ यां यमाय दण्डहस्ताय प्रेताधिपतये महिषवाहनाय
३ क्षां निर्ऋतये खड्गहस्ताय रक्षोऽधिपतये नरवाहनाय
३ वां वरुणाय पाशहस्ताय जलाधिपतये मकरवाहनाय
३ यां वायवे ध्वजहस्ताय प्राणाधिपतये रुरुवाहनाय
३ सां सोमाय शङ्खहस्ताय नक्षत्राधिपतयेऽश्ववाहनाय
३ हां ईशानाय त्रिशूलहस्ताय विद्याधिपतये वृषवाहनाय सपरिवाराय नमः ।

सर्वा आवरणदेवता देवस्याभिमुखासीनाः स्वयं तत्तदभिमुखः पूजयामीति भावयेत् । गणनाथस्य पुनस्तर्पणं षोडशोपचारपूजा च । एवं पञ्चावरणदेवता इष्ट्वा पुनर्देवं दशधा प्राग्वदुपतर्प्य षोडशभिरुपचारैराराधयेत् । ते च—पाद्यार्घ्याचमनीयस्नानवासोगन्धपुष्पधूपदीपनीराजनच्छत्रचामरयुगदर्पणनैवेद्यपानीयताम्बूलाख्याः ।
मन्त्रास्तु—

श्रीं ह्रीं क्लीं महागणपतये पाद्यं कल्पयामि नमः, अर्घ्यं कल्पयामि नमः इत्यादयः । नैवेद्ये त्रिकोणवृत्तचतुरश्रमण्डलकरणम्, मूलेन प्रोक्षणम्, वं इति धेनुमुद्रया अमृतीकरणम्, मूलेन सप्तवाराभिमन्त्रणम्, प्राणादिमुद्राप्रदर्शनञ्च कुर्यादिति विशेषः । इहापरिगणितान्यपि पूर्वोत्तरापोशनहस्तप्रक्षालनगण्डूषपुनराचमनीयानि नैवेद्याङ्गत्वेन पूर्ववत्कल्पयेत् ।

## अग्निकार्यम्

अथ श्रीक्रमे वक्ष्यमाणेन विधिना स्थण्डिलकल्पनादि प्रधानदेवतापञ्चोपचारान्तं कृत्वा—

श्रीं ह्रीं क्लीं श्रियै स्वाहा—श्रिया इदं न मम,

श्रीं ह्रीं क्लीं श्रीपतये स्वाहा—श्रीपतय इदं न मम,

इत्यादिरीत्या पञ्चममिथुनवर्जं श्वचादिविघ्नकर्तृपर्यन्ता । विंशतिदेवत उद्दिश्य चतुर्थ्यन्तैः बीजत्रयाद्यैः स्वाहाशिरस्कैः तत्तन्नाममन्त्रै राज्येनैकैकवारमुद्देशत्यागपूर्वकं हुत्वा, अथ प्रधानदेवतायै महा गणपतये मूलेन दशवारं हुत्वा वक्ष्यमाणप्रकारेण बलिं प्रदाय महा व्याहृत्यादिविधिशेषं निर्वर्तयेत् ।

## बलिदानम्

होमाकरणपक्षे बलिमात्रं दद्यात् । यथा—

पुरतः स्ववामभागे त्रिकोणवृत्तचतुरश्रात्मकं मण्डलं कृत्वा 'ऐं व्या पकमण्डलाय नमः' इति गन्धादिभिरभ्यर्च्यार्धभक्तपूरितोदकं सक्षीरा दित्रयं पात्रं तत्र विन्यस्य 'ओं ह्रीं सर्वविघ्नकृद्भ्यः सर्वभूतेभ्यो हुं फट् स्वाहा' इति मन्त्रं त्रिः पठित्वा दक्षकरार्पितं वामकरतलमुद्रास्पृष्ट क्षीरं बल्युपरि दत्वा बाणमुद्रया बलिं भूतेभ्यो ग्राहितं विभाव्य प्रणमेत् ।

## तर्पणजपस्तोत्राणि

अथ प्रक्षालितपाणिपाद आचान्त आगत्य देवं मूलेन त्रिधा सन्तर्प्य पुष्पाञ्जलिं दत्वा प्रदक्षिणनुतीर्विधाय जपेत् ।

अस्य श्रीमहागणपतिमहामन्त्रस्य गणक ऋषये नम इति शिरसि निचृद्गायत्रीच्छन्दसे नम इति मुखे, महागणपतये देवतायै नम इति हृदये, गं बीजाय नम इति गुह्ये, स्वाहा शक्त्यै नम इति पादयोः ओं कीलकाय नम इति नाभौ, ममाभीष्टसिद्धये विनियोगाय नम इति करसम्पुटे च न्यस्य, उक्तैः षडङ्गमन्त्रैः अङ्गुष्ठादिषु हृदयादिषु च न्यासं विधाय पूर्वोक्तभङ्ग्या ध्यात्वा, श्यामाक्रमे वक्ष्यमाणप्रकारेण संस्कृतां मालामादाय श्रीक्रमे वक्ष्यमाणविधिना मूलमष्टोत्तरशतवारम् आवर्त्य पुनरपि न्यासादि कृत्वा—

**गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत्कृतं जपम् ।**
**सिद्धिर्भवतु मे देव त्वत्प्रसादान्मयि स्थिरा ॥**

इति सामान्यार्घ्योदकेन जपं देवस्य दक्षकरे समर्पितं विभाव्य स्तुवीत । यथा श्रीभगवानुवाच—

गणेशस्य स्तवं वक्ष्ये कलौ झटिति सिद्धिदम् ।
न न्यासो न च संस्कारो न होमो न च तर्पणम् ।।
न मार्जनं च पञ्चाढ्यं सहस्रजपमात्रतः ।
सिध्यत्यर्चनतः पञ्च शतब्राह्मणभोजनात् ।।

अस्य श्रीगणपतिस्तोत्रमालामन्त्रस्य भगवान् श्रीसदाशिव ऋषिः, उष्णिक् छन्दः, श्रीगणपतिर्देवता, श्रीगणपतिप्रसादसिध्यर्थे जपे विनियोगः । ध्यानम्—

चतुर्भुजं रक्ततनुं त्रिणेत्रम्
पाशांकुशौ मोदकपात्रदन्तौ ।
करैर्दधानं सरसीरुहस्थं
गणाधिनाथं शशिचूडमीडे ।।

## सदाशिवप्रोक्तं गणेशाष्टम्

विनायकैकभावनासमर्चनासमर्चित-
प्रमोदकैः प्रमोदकैः प्रमोदमोदमोदकम् ।
यदर्पितं समर्पितं नवान्नधान्यनिर्मितं
न खण्डितं न खण्डितं न खण्डमण्डनं कृतम् ।।

सजातिकृद्विजातिकृत्स्वनिष्ठभेदवर्जितं
निरञ्जनञ्च निर्गुणं निराकृतिञ्च निष्क्रियम् ।
सदात्मकं चिदात्मकं सुखात्मकं परं पदं
भजामि तं गजाननं स्वमाययात्तविग्रहम् ।।

गणाधिप त्वमष्टमूर्तिरीशसूनुरीश्वरः
त्वमम्बरञ्च शम्बरं धनञ्जयः प्रभञ्जनः ।
त्वमेव दीक्षितः क्षितिर्निशाकरः प्रभाकरः
चराचरप्रचारहेतुरन्तराय शान्तिकृत् ।।

अनेकदं तमालनीलमेकदन्तसुन्दरं
गजाननं नमो गजाननामृताब्धिमन्दिरम् ।
समस्तवेदवादसत्कलाकलापमन्दिरं
महान्तरायदुस्तमश्शमार्कमाश्रितोदरम् ।।

सरक्तहेमघर्षिकानिनादनूपुरस्वनैः
मृदङ्गतालनादभेदसाधनानुरूपतः ।
धिमिद्धिमित्ततोऽङ्गतोऽङ्गथेयिथेयि शब्दतो
विनायकश्शशांकशेखराग्रतः प्रनृत्यति ।।

नमामि नाकनायकैकनायकं विनायकं
कलाकलापकल्पनानिदानमादिपूरुषम् ।
गणेश्वरं गुणेश्वरं महेश्वरात्मसम्भवं
स्वपादमूलसेविनामपारवैभवप्रदम् ।।

भजे प्रचण्डतुन्दिलं सदन्दशूकभूषणं
सनन्दनादिवन्दितं समस्तसिद्धसेवितम् ।
सुरासुरौघयोस्सदा जयप्रदं भयप्रदं
समस्तविघ्नघातिनं स्वभक्तपक्षपातिनम् ।।

कराम्बुजात्तकङ्कणः पदाब्जकिङ्किणीगणो
गणेश्वरो गुणार्णवः फणीश्वराङ्गभूषणः ।
जगत्त्रयान्तरायशान्तिकारकोऽस्तु तारकः
भवार्णवादनेकदुर्ग्रहाच्चिदेकविग्रहः ।।

यो भक्तिप्रवणः परावरगुरोस्स्तोत्रं गणेशाष्टकं
शुद्धस्संयतचेतसा यदि पठेन्नित्यं त्रिसन्ध्यं पुमान् ।
तस्य श्रीरतुला स्वसिद्धिसहिता श्रीशारदा सर्वदा
स्यातां तत्परिचारिके किल तदा काः कामनानां कथाः ।।

## सुवासिनीबटुकपूजा

ततः श्रीक्रमे वक्ष्यमाणेन क्रमेण सुवासिनीपूजनहविःप्रतिपत्ति-देवतोद्वासनादिशेषं समापयेत्। सुवासिन्या साकं बटुकार्चनमपि कुर्यात्। तत्र मन्त्रः—

'श्रीं ह्रीं क्लीं बं बटुकाय नमः' इति। 'श्रीं ह्रीं क्लीं सुवासिन्यै नमः' इति। मम निर्विघ्नं मन्त्रसिद्धिर्भूयादिति तौ प्रति प्रार्थनायां तथास्त्विति तत्प्रतिवचनम्। मूलान्ते 'अमुकतत्त्वं शोधयामि नमः स्वाहेति' तत्त्वत्रयशोधनञ्चेति विशेषः।

## पुरश्चरणविधिः

एवं नित्यक्रमं प्रवर्तयन् श्यामाक्रमे वक्ष्यमाणेन विधिना अष्टा-विंशतिसहस्रसंख्यापुरश्चरणजपः। प्रकृते कलियुगत्वात्तच्चतुर्गु-णितम्। प्रथमेऽहनि सहस्रम्। ततः प्रत्यहं त्रिसहस्रसंख्यञ्च कृत्वा जपदशांशेन होमः, तद्दशांशेन तर्पणम्, तद्दशांशेन ब्राह्मणभोज-नानि च विदध्यात्। होम द्रव्याणि च—

**मोदकैः पृथुकैर्लाजैः सक्तुभिश्चेक्षुपर्वभिः।**
**नारिकेलैस्तिलैश्शुद्धैस्सुपक्वैः कदलीफलैः॥**

इत्युक्तान्यष्टौ। एतेषां प्रमाणन्तु—मोदका अखण्डिता ग्रासमिताः। पृथुकलाजसक्तवो मुष्टिपरिमिताः। इक्षुप्रमाणं श्लोक एवोक्तम्। नारिकेलम् अष्टधा खण्डितम्। तिलाः चुलुकप्रमाणाः शतसंख्याका वा। कदलीफलमल्पम् यद्यखण्डितम्। पृथु चेद्यथारुचि खण्डितम्। अमीषां द्रव्याणां मधुक्षीरघृतसिक्तानां पृथक्पृथगाहुतयो होमसंख्यापिण्डाष्टमभागमिताः ३५० श्लोक पाठक्रमेण भवन्ति। अष्टद्रव्यहोमात् प्रागावरणदेवतानामेकैकाहु-तिः प्रधानदेवतायाश्च या दशाहुतयः ताः आज्येनैव भवन्ति। तर्प-णपूर्वाङ्गन्तु चतुरावृत्तितर्पणवदेव।

इत्थं पुरश्चरणेन सिद्धमनुः, स्वातन्त्र्येणोपास्तौ च श्रीक्रमोक्तेन क्रमेण नैमित्तिकार्चनपरः, काम्यापेक्षी चेत् श्यामाक्रमे वक्ष्यमाणेन तत्तत्कामानुगुणेन द्रव्येणेष्ट्वा सिद्धसंकल्पः सुखी विहरेत् इति शिवम्।

इति श्रीभासुरानन्दनाथचरणारविन्दमिलिन्दाय नमः।

॥ श्रीः ॥

# अथ श्रीक्रमः

## ब्राह्ममुहूर्तकृत्यम्

मन्त्रमहार्णवश्रीविद्यार्णवनित्योत्सवादिषु प्रतिपादितम् ।

ब्राह्मे मुहूर्ते चोत्थाय निद्रास्थानाद्बहिर्निर्गत्य हस्तौ पादौ मुखं च प्रक्षाल्याचम्य रात्रिवस्त्रं परित्यज्य शुद्धवस्त्रं परिधाय शुद्धासन उपविश्याज्ञाचक्रे कोटीन्दुप्रकाशे स्वगुरुं ध्यायेत्—

**ओं आनन्दमानन्दकरं प्रसन्नं ज्ञानस्वरूपं निजबोधरूपम् ।**
**योगीन्द्रमीड्यं भवरोगवैद्यं श्रीमद्गुरुं नित्यमहं भजामि ॥**

'ऐं ह्रीं श्रीं ह्स्ख्फ्रें हसक्षमलवरयूं स ह क्ष म ल व र यीं ह्सौः स्हौ स्वरूपनिरूपणहेत्वमुकाम्बासहितश्रीगुरुपादुकां पूजयामि'

'स्वच्छप्रकाशविमर्शहेत्वमुकाम्बासहितश्रीपरमगुरुपादुकां पूजयामि'

'स्वात्मारामपञ्जरविलीनचेतस्कामुकाम्बासहित श्रीपरमेष्ठिगुरुपादुकां पूजयामि' इति गुरुपरमगुरुपरमेष्ठिगुरुपादुकां पूजयेत् ।

**गुरुर्ब्रह्मा गुरुर्विष्णुः गुरुर्देवो महेश्वरः ।**
**गुरुस्साक्षात्परं ब्रह्म तस्मै श्रीगुरवे नमः ॥**

प्राणानायम्य तच्चरणयुगलविगलदमृतरस-विसरपरिप्लुताखिलाङ्गमात्मानं भावयेत् ।

ततश्च सर्वचैतन्यात्मिकां जाग्रदाद्यवस्थात्रयावभासिकां सर्वाधिष्ठानरूपां प्रत्यक्चैतन्याभिन्नब्रह्मात्मिकां सर्वचैत्यविवर्जितामखण्डां चितिं भावयेत् ।

आमूलाधारादा ब्रह्मबिलं विलसन्तीं तडिल्लतासदृशाकृतिं तरुणारुणपिञ्जरां तैजसीं ज्वलन्तीं कुण्डलिरूपां सर्वाधिष्ठानभूतां परां संविदं भावयेत् ।

नियमितपवनस्पन्दो मूलाधारे चतुर्दलपद्मे त्रिकोणात्मकं पीठस्थितज्योतिर्लिङ्गमावेष्ट्यावस्थितां सार्धत्रिवलयां ओं हूं बीजेनोत्थिताम् 'ऐं ह्रीं श्रीं' इति मन्त्रं च जपन् कुण्डलिनीं ध्यायेत् ।

## कुण्डलिनीमन्त्रः

वाग्भवं भुवनेशी च श्री बीजन्तु तथैव च ।
त्र्यक्षरो मन्त्र आख्यातः कुण्डलिन्यास्सुसिद्धिदः ।।१।।

ऋषिश्शक्तिस्समाख्यातो गायत्रीच्छन्द ईरितम् ।
चेतना कुण्डली शक्तिर्देवतात्र समीरिता ।।२।।

वाग्भवं बीजमाम्नातं शक्तिः श्रीबीजमुच्यते ।
हृल्लेखाकीलकं प्रोक्तं कुण्डलिन्यास्तु चिन्तने ।।३।।

विनियोगस्समाख्यातः सर्वागमविशारदैः ।
बीजत्रयद्विरावृत्या षडङ्गन्यास ईरितः ।।४।।

ध्यानं वक्ष्यामि कुण्डल्यास्सावधानतया शृणु ।
मूलाधारे त्रिकोणे तु सूर्यकोटिसमत्विषि ।।५।।

प्रसुप्तभुजगाकारां सार्धत्रिवलयस्थिताम् ।
नीवारशूकवत्तन्वीं तडित्कोटिसमप्रभाम् ।।६।।

सूर्यकोटिप्रभां दीप्तां चन्द्रकोटिसुशीतलाम् ।
शिवशक्तिमयीं देवीं शंखावर्तक्रमात्स्थिताम् ।।७।।

सुषुम्नामध्यमार्गेण यान्तीं परशिवावधि ।
ह्रींकारबीजरूपेण चिन्तयेद्योगवर्त्मना ।।८।।

सिन्दूरारुणविग्रहां त्रिनयनां माणिक्यमौलिस्फुर-
त्तारानायकशेखरां स्मितमुखीमापीनवक्षोरुहाम् ।
पाणिभ्यां मणिपूर्णरत्नचषकं रक्तोत्पलं बिभ्रतीं
सौम्यां रत्नघटस्थसव्यचरणां ध्यायेत्परामम्बिकाम् ।।

## कुण्डलिनीस्तुतिः

मूलोन्निद्रभुजङ्गराजसदृशीं यान्तीं सुषुम्नान्तरं
भित्वाधारसमूहमाशु विलसत्सौदामिनीसन्निभाम् ।
व्योमाम्भोजगतेन्दुमण्डलगलद्दिव्यामृतौघैः पतिं
सम्भाव्य स्वगृहागतां पुनरिमां सञ्चिन्तयेत्कुण्डलीम् ।।

हंसं नित्यमनन्तमद्वयगुणं स्वाधारतो निर्गता
शक्तिः कुण्डलिनी समस्तजननी हस्ते गृहीत्वा च तम्।
याता शम्भुनिकेतनं परसुखं तेनानुभूय स्वयं
यान्ती स्वाश्रममर्ककोटिरुचिराध्येया जगन्मोहिनी ।।

अव्यक्तं परबिम्बमञ्चितरुचिं नीत्वा शिवस्यालयं
शक्तिः कुण्डलिनी गुणत्रयवपुर्विद्युल्लतासन्निभा ।
आनन्दामृतकन्दगं पुरमिदं चन्द्रार्ककोटिप्रभं
संवीक्ष्य स्वगृहं गता भगवती ध्येयानवद्या गुणैः ।।

मध्ये वर्त्म समीरणद्वयमिथस्सङ्घट्टसंक्षोभजं
शब्दस्तोममतीत्य तेजसि तडित्कोटिप्रभाभास्वराम् ।
उद्यन्तीं समुपास्महे नवजपासिन्दूरसान्द्रारुणां
सान्द्रानन्दसुधामयीं परशिवं प्राप्तां परां देवताम् ।।

गमनागमनेषु जाङ्घिकी सा
तनुताद्योगफलानि कुण्डली ।
मुदिता कुलकामधेनुरेषा
भजतां वाञ्छितकल्पवल्लरी ।।

आधारस्थितशक्तिबिन्दुनिलयां नीवारशूकोपमां
नित्यानन्दमयीं गलत्परसुधावर्षैः प्रबोधप्रदैः ।
सिक्त्वा षट्सरसीरुहाणि विधिवत्कोदण्डमध्योदितां
ध्यायेद्भास्वरबन्धुजीवरुचिरां संविन्मयीं देवताम् ।।

हृत्पङ्केरुह भानुबिम्बनिलयां विद्युल्लतामन्थरां
बालार्कारुणतेजसा भगवतीं निर्भर्त्सयन्तीं तमः ।
नादाख्यं परमर्धचन्द्रकुटिलं संविन्मयीं शाश्वतीं
यान्तीमक्षररूपिणीं विमलधीर्ध्यायेद्विभुं तेजसाम् ।।

भाले पूर्णनिशाकरप्रतिभटां नीहारहारत्विषा
सिञ्चन्तीममृतेन देवममितेनानन्दयन्तीं तनुम् ।
वर्णानां जननीं तदीयवपुषा संव्याप्य विश्वं स्थितां
ध्यायेत्सम्यगनाकुलेन मनसा संविन्मयीमम्बिकाम् ।।

मूले भाले हृदि च विलसद्वर्णरूपा सवित्री
पीनोत्तुङ्गस्तनभरनमन्मध्यदेशा महेशी ।
चक्रे चक्रे गलितसुधया सिक्तगात्री प्रकामं
दद्यादद्य श्रियमविकलां वाङ्मयी देवता नः ।।

आधारबन्धप्रमुखक्रियाभिः समुत्थिता कुण्डलिनी सुधाभिः ।
त्रिधामबीजं शिवमर्चयन्ती शिवाङ्गना वः शिवमातनोतु ।।

निजभवननिवासादुच्चलन्ती विलासैः
पथि पथि कमलानां चारु हासं विधाय ।
तरुणतपनकान्तिः कुण्डली देवता सा
शिवसदनसुधाभिः दीपयेदात्मतेजः ।।

सिन्दूरपुञ्जनिभमिन्दुकलावतंसमानन्दपूर्णनयनत्रयशोभिवक्त्रम् ।
आपीनतुङ्गकुचनम्रमनङ्गतन्त्रं शम्भोः कलत्रममितां श्रियमातनोतु ।।

वर्णैरर्णवषट्दिशा रविकलाचक्षुर्विभक्तैः क्रमा-
त्सान्तैरादिभिरावृतान् क्षहयुतैष्षट्चक्रमध्यानिमान् ।
डाकिन्यादिभिराश्रितान् परिचितान् ब्रह्मादिभिर्दैवतैः
भिन्दाना परदेवता त्रिजगतां चित्तेषु दत्तां मुदम् ।।

आधाराद्गुणवृत्तशोभिततनुं निर्गत्वरीं सत्वरं
भिन्दन्तीं कमलानि चिन्मयघनानन्दप्रबोधोद्धुराम् ।
संक्षुब्धंध्रुवमण्डलामृतकरप्रस्यन्दमानामृत-
स्रोतःकन्दलितामसन्दतडिदाकारां शिवां भावये ।।

मूलाधारे त्रिकोणे तरुणतरणिभाभास्वरे विभ्रमन्तं
कामं बालार्ककालानलजरठकुरङ्गांककोटिप्रभाभम् ।
विद्युन्मालासहस्रद्युतिरुचिरलसद्वन्धुजीवाभिरामं
त्रैगुण्याक्रान्तबिन्दुं जगदुदयलयैकान्तहेतुं विचिन्त्य ।।

तस्योर्ध्वे विस्फुरन्तीं स्फुटरुचिरतटित्पुञ्जभाभास्वराङ्गी-
मुद्गच्छन्तीं सुषुम्नामनु सरणिशिखामा ललाटेन्दुबिम्बम् ।
चिन्मात्रां सूक्ष्मरूपां जगदुदयकरीं भावनामात्रगम्यां
मूलं या सर्वधाम्नां स्फुरति निरुपमा हूँकृतोदञ्चितोरः ।।

नीता सा शनकैरधोमुखसहस्रारारुणाब्जोदरे
च्योतत्पूर्णशशांकबिम्बमधुनः पीयूषधारास्रुतिम् ।
रक्तां मन्त्रमयीं निपीय च सुधानिःष्यन्दरूपा विशे-
द्भूयोऽप्यात्मनिकेतनं पुनरपि प्रोत्थाय पीत्वा विशेत् ।

योऽभ्यस्यत्यनुदिनमेवमात्मनोऽन्त-
र्बीजांशं दुरितजरापमृत्युरोगान् ।
जित्वासौ स्वयमिव मूर्तिमाननङ्गः
सञ्जीवेच्चिरमातिनीलकेशजालः ।।

इति तद्रश्मिनिकरभस्मितसकलकश्मलजालो मूलं मनसा दश-वारमावर्तयेत् ।

अथ षट्शताधिकैकविंशतिसाहस्रिकां निःश्वासोच्छ्वासरूपिणीं मूलाधारादिब्रह्मरन्ध्रान्तसप्तचक्रनिवासिनीभ्यो देवताभ्यो निवेदयामि तथा--

मूलाधारे चतुर्दलपद्मे वं शं षं सं चतुरक्षरे चतुष्कोणयन्त्रे ऐरावत-वाहने लं बीजे स्थिताय शुद्धबुद्धिसहिताय कुंकुमवर्णाय महागणपतये षट्सहस्रमजपागायत्रीजपं निवेदयामि,

बं भं मं यं रं लं षडक्षरे स्वाधिष्ठानचक्रे षट्दलपद्मेऽर्धचन्द्रे मकरवाहने वं बीजे स्थिताय सरस्वतीशक्तिसहिताय सिन्दूरवर्णाय ब्रह्मणे षट्सहस्रमजपाजपं निवेदयामि,

मणिपूरकचक्रे दशदलपद्मे डं ढं णं तं थं दं धं नं पं फं दशाक्षरे त्रिकोणयन्त्रे मेषवाहने रं बीजे स्थिताय लक्ष्मीशक्तिसहिताय नील-वर्णाय विष्णवे षट्सहस्रमजपाजपं निवेदयामि ।

अनाहतचक्रे द्वादशदलपद्मे कं खं गं घं ङं चं छं जं झं ञँ टं ठं द्वादशा-क्षरे षट्कोणयन्त्रे हरिणवाहने स्थिताय पार्वतीशक्तिसहिताय हेमवर्णा परमशिवाय षट्सहस्रमजपाजपं निवेदयामि ।

विशुद्धिचक्रे षोडशदलपद्मे अं आं इं ईं उं ऊं ऋं ॠं लृं ॡं एं ऐं ओं औं अं अः षोडशाक्षरे शून्ययन्त्रे हस्तिवाहने स्थिताय प्राणशक्ति-सहिताय शुद्धस्फटिकसंकाशाय जीवाय सहस्रमेकमजपाजपं निवेदयामि

आज्ञाचक्रे द्विदलपद्मे श्वेतवर्णे हं क्षं द्व्यक्षरे लिङ्गयन्त्रे नरवाहने स्थिताय ज्ञानशक्तिसहिताय विद्युद्वर्णाय गुरवे सहस्रमेकमजपाजपं निवेदयामि,

ब्रह्मरन्ध्रे सहस्रदलपद्मे चित्रवर्णे अं आं इं ईं उं ऊं ऋं ॠं लृं लॄं एं ऐं ओं औं अं अः कं खं गं घं ङं चं छं जं झं ञँ टं ठं डं ढं णं तं थं दं धं नं पं फं बं भं मं यं रं लं वं शं षं सं हं लं क्षं इति विंशतिवारोच्चारिते सहस्राक्षरे विसर्गयन्त्रे बिन्दुवाहने पूर्णचन्द्रमण्डले आनन्दमहासमुद्र-मध्ये चिन्मयमणिद्वीपे चित्सारचिन्तामणिमयमन्दिरे कल्पवृक्षाधस्तले अव्याकृतब्रह्ममहासिंहासने स्थिताय नानावर्णाय वर्णातीताय चिच्छक्ति-सहिताय परमात्मने सहस्रमेकमजपाजपं निवेदयामि इति निवेदयेत् ।

अथ कतिचित् क्षणान् हंसः सोऽहमिति श्वासोच्छ्वासेषु भावयेत् ।

**हकारेण बहिर्याति सकारेण विशेत्पुनः ।**
**हंसोऽतिपरमं मन्त्रं जीवो जपति सर्वदा ।।**

इति ध्यात्वा मानसैरुपचारैस्सर्वान् देवान् पूजयेत् ।

लं पृथिव्यात्मकं गन्धं समर्पयामि (कनिष्ठिकांगुष्ठाभ्याम्) ।

हं आकाशात्मकं पुष्पं (अंगुष्ठतर्जनीभ्याम्) ।

यं वाय्वात्मकं धूपमाघ्रापयामि (तर्जन्यंगुष्ठाभ्याम्) ।

रं वन्ह्यात्मकं दीपं दर्शयामि (अंगुष्ठमध्यमाभ्याम्) ।

वं अमृतात्मकं नैवेद्यं निवेदयामि (अंगुष्ठानामिकाभ्याम्) ।

सं सर्वात्मकं ताम्बूलादिसर्वोपचारान् समर्पयामि । (साङ्गुष्ठा-भिस्सर्वाभिः) ।

आमूलाधारादाब्रह्मबिलं विलसन्त्यां बिसतन्तुतनीयस्यां विद्युत्पुं-जपिंजरायां विवस्वदयुतप्रकाशायां कुण्डलिन्यामेव निम्नांकितेषु चक्रेषु श्रीचक्रस्थितां देवतां भावयन् पूजयेत् ।

तद्यथा––मूलाधारादधोगते अकुलसहस्रारे देहश्रीचक्रयोरभेदेन भूपुरस्थिताः अणिमादिदेवीः पूजयामि । तदुपरि स्थिते विषुवन्नाम्नि रक्तवर्णषड्दलषोडशदलगतकामाकर्षिण्यादिदेवीः पूजयामि ।

मूलाधारे चतुर्दलेऽष्टदलगतानङ्गकुसुमादि देवीःपूजयामि ।

स्वाधिष्ठाने षट्दले चतुर्दशारगतसर्वसंक्षोभिण्यादिदेवी: पूजयामि।

मणिपूरे दशदले बहिर्दशारगतसर्वसिद्धिप्रदादिदेवी: पूजयामि।

अनाहते द्वादशदलेऽन्तर्दशारगतसर्वज्ञादिदेवी: पूजयामि।

विशुद्धे षोडशदलेऽष्टारगतवशिन्यादिदेवी: पूजयामि।

लम्बिकाग्रे रेखात्रये त्रिकोणगतमहाकामेश्वर्यादिदेवीश्च पूजयामि।

आज्ञायां द्विदले बिन्दुगतश्रीत्रिपुरामहात्रिपुरसुन्दरीं कामेश्वराङ्कनिलयां देवीं पूजयामि इति।

श्रीमहात्रिपुरसुन्दर्या सचक्रावयवान्यावरणानि विलीनानि विभाव्य मध्यत्र्यश्राग्रे स्थितजीवात्मना सहितां देवीं हृदयं नीत्वा स्वाञ्जलिगतकुसुमैस्तां सम्पूज्य ततोऽकुलेन्दुगलितामृतधारारूपिणी: चन्दनकुसुमधूपदीपनैवेद्यशालिकरकमला:पीतासितश्यामरक्तशुक्लवर्णा: भूवियदनिलानलजललक्षणा: पञ्चभूतमयी: सर्वावयवसुन्दरी: पञ्च देवता देव्यग्रे संस्मृत्य ताभि: चन्दनधूपाद्युपचारान् देव्यै समर्पितान् स्मारंस्मारं पञ्चोपचारमुद्राश्च प्रदर्शिता भावयेत्।

ततो देव्या नासायां गन्धदेवता, श्रोत्रे पुष्पदेवता, नाभौ धूपदेवता, नयने दीपदेवता, जिह्वायां नैवेद्यदेवता इति क्रमेण ता विलीना विभाव्य मूलविद्यामुच्चरन् जीवात्मानं देवीपादमूले लीनं विभाव्य हृदयगतदेवीरूपं मध्यत्र्यस्रसहितं तथैव केवलं ज्योतिर्मयतामापन्नं ध्यायन् संक्षोभिण्यादिमुद्रा भावयित्वा क्षणं न किञ्चिदपि चिन्तयेत्।

## रश्मिमालामन्त्राः

ततो रश्मिमालाप्रवर्तनम्। रश्मिमालामन्त्रेषु वैदिकान्मन्त्रान् सस्वरान् पठेत्।

'ओं भूर्भुवस्स्व:, तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि, धियो यो न: प्रचोदयात्' इति गायत्री मूलाधारे ।।१।।

(सावित्र्या विश्वामित्र ऋषि: नृचिद्गायत्रीच्छन्द: सविता देवता, तत्प्रीत्यर्थे जपे विनियोग:। ध्यानम्—

**मुक्ताविद्रुमहेमनीलधवल छायैर्मुखैस्त्रीक्षणै-**
**र्युक्तामिन्दुनिबद्धरत्नमकुटां तत्त्वार्थवर्णात्मिकाम्।**

गायत्री वरदाभयाङ्कुशकशाः शुभ्रं कपालं गुणं
शङ्खं चक्रमथारविन्दयुगलं हस्तैर्वहन्तीं भजे ॥)
'यत इन्द्र भयामहे ततो नो अभयं कृधि ।
मघवञ्छग्धि तव तन्न ऊतये विद्विषो विमृधो जहि ॥
स्वस्तिदा विशस्पतिर्वृत्रहा विमृधो वशी ।
वृषेन्द्रः पुर एतु नः स्वस्तिदा अभयंकरः' ॥

इत्यैन्द्री विद्या सप्तषष्ट्यर्णा संकटे भयनाशिनी, हृदये ॥२॥

(अभयंकरमन्त्रस्य गृत्समद ऋषिः, त्रिष्टुप् छन्दः, अभयंकरो देवता, तत्प्रीत्यर्थे जपे विनियोगः । ध्यानम्—

आरूढो वारणेन्द्रं दशशतनयनः श्यामलः कोमलाङ्गः
वर्मी वीरः प्रतापी प्रतिभटदहनप्रज्ज्वलच्चन्द्रपाणिः ।
दोर्भिर्दिव्यायुधाद्यैर्मणिगणखचितैर्देवमन्त्रीसनाथो
दत्वाभीष्टानि शश्वत्परिहृतदुरितः पातु विश्वं महेन्द्रः ॥

'ओं घृणिस्सूर्य आदित्योम्' इत्यष्टार्णा सौरी तेजोदा, फाले ॥३॥

(सौरमन्त्रस्य देवभाग ऋषिः, गायत्रीच्छन्दः, सूर्यो देवता, तत्प्रसादसिध्यर्थे जपे विनियोगः । ध्यानम्—

धृतपद्मद्वयं भानुं तेजोमण्डलमध्यगम् ।
सर्वाधिव्याधिशमनं छायाश्लिष्टतनुं भजे ॥)

'ओम्' इति प्रणवः केवलो ब्रह्मविद्या मुक्तिप्रदा,ब्रह्मरन्ध्रे ॥४॥

(प्रणवस्य ब्रह्मा ऋषिः, गायत्रीच्छन्दः, परमात्मा देवता, तत्प्रसादसिध्यर्थे जपे विनियोगः । ध्यानम्—

ओंकारवाच्यमुच्चण्डचण्डांशुसदृशप्रभम् ।
वासुदेवाभिधं ब्रह्म विश्वगर्भमुपास्महे ॥)

'ओं परोरजसेऽसावदोम्' इति नवार्णा तुरीया गायत्रीस वैक्यविमर्शिनी, द्वादशान्ते ॥५॥

(तुरीयागायत्रीमन्त्रस्य विश्वामित्र ऋषिः, गायत्रीच्छन्दः, सविता देवता, तत्प्रीत्यर्थे जपे विनियोगः । ध्यानम्—

देवीं तुरीयगायत्रीं तुर्यातीतपदाश्रयाम् ।
परोरजःप्रकाशात्मचितिरूपामहं भजे ॥)

रश्मिपञ्चकमेतन्मूलाधारहृत्फालविधिबिलद्वादशान्तस्थानबीज-तया विभावनीयम्। द्वादशान्तस्थानन्तु ललाटस्योत्तरभागः।

'ओं सूर्याक्षितेजसे नमः। खेचराय नमः। असतो मा सद्गमय तमसो मा ज्योतिर्गमय। मृत्योर्माऽमृतं गमय। उष्णो भगवान् शुचि रूपः। हंसो भगवान् शुचिरप्रतिरूपः।

**विश्वरूपं घृणिनं जातवेदसं हिरण्मयं ज्योतिरेकं तपन्तम्।**
**सहस्ररश्मिः शतधा वर्तमानः प्राणः प्रजानामुदयत्येष सूर्यः॥**

'ओं नमो भगवते सूर्यायाहोवाहिनि वाहिन्यहोवाहिनि वाहि स्वाहा'।

**वयस्सुपर्णा उपसेदुरिन्द्रं प्रियमेधा ऋषयो नाथमानाः।**
**अपध्वान्तमूर्णु हि पूर्धिचक्षुर्मुमुग्ध्यस्मान्निधयेव बद्धान्॥**

'पुण्डरीकाक्षाय नमः। पुष्करेक्षणाय नमः। अमलेक्षणाय नमः कमलेक्षणाय नमः। विश्वरूपाय नमः। श्रीमहाविष्णवे नमः' इति षोडशमन्त्रसमष्टिरूपिणी चक्षुष्मती विद्या दूरदृष्टिसिद्धिप्रद मूलाधारे॥६॥

(चक्षुष्मतीमन्त्रस्य भार्गव ऋषिः, नानाच्छन्दांसि, चक्षुष्मती देवता, तत्प्रीत्यर्थे जपे विनियोगः। ध्यानम्:––

**चक्षुस्तेजोमयं पुष्पकन्दुकं बिभ्रती करैः।**
**रौप्यसिंहासनारूढां देवीं चक्षुष्मतीं भजे॥**

'ओं गन्धर्वराज विश्वावसो ममाभिलषितां कन्यां प्रयच्छ स्वाहा' इत्युत्तमकन्याविवाहदायिनी हृदये॥७॥

(विश्वावसुमन्त्रस्य संमोहन ऋषिः। गायत्रीच्छन्दः। विश्वावसु देवता। तत्प्रीत्र्थे जपे विनियोगः। ध्यानम्––

**रक्ताङ्गरागारुणभूषणाढ्यं वीणाधरं वीटिकयोल्लसन्तम्।**
**गन्धर्वकन्याजनगीयमानं विश्वावसुं सद्बृहतीं नमामि॥**

'ओं नमो रुद्राय पथिषदे स्वस्ति मां सम्पारय' इति मार्गसंकट हारिणी, फाले॥८॥

(पथिषद्रुद्रमन्त्रस्य वामदेव ऋषिः पंक्तिच्छन्दः, पथिषद्रु देवता। तत्प्रीत्यर्थे जपे विनियोगः। ध्यानम्––

**आत्तसज्जधनुर्बाणकरं वृषभसंस्थितम् ।**
**अन्नपूर्णासमाश्लिष्टं पथिषद्रुद्रमाश्रये ।।८)**

'ओं तारे तुतारे तुरे स्वाहा' इति जलापच्छमनी, ब्रह्मरन्ध्रे ।।९।।

(तारामन्त्रस्य मत्स्य ऋषिः, विराट्छन्दः, ताराम्बा देवता, तत्प्रीत्यर्थे जपे विनियोगः । ध्यानम्—

**नौकासिंहासनारूढां शाक्यदर्शनदेवताम् ।**
**जलापच्छमनीं वन्दे तारां वारिदमेचकाम् ।।)**

'अच्युताय नमः, अनन्ताय नमः, गोविन्दाय नमः, इति महाव्याधि-नाशिनी नामत्रयी विद्या, द्वादशान्ते ।।१०।।

(नामत्रयमन्त्रस्य काश्यपात्रिभारद्वाजा ऋषयः, अनुष्टुप् छन्दः, श्रीमहाविष्णुर्देवता, तत्प्रीत्यर्थे जपे विनियोगः । ध्यानम्—

**समस्तदुस्तरव्याधिसंघध्वंसपटीयसे ।**
**अच्युतानन्तगोविन्दनाम्ने धाम्ने नमो नमः ।।)**

एतद्रश्मिपञ्चकं मूलाधारादिपरिकरतया ज्ञेयम् ।

"ओं श्रीं ह्रीं क्लीं ग्लौं गं गणपतये वर वरद सर्वजनं मे वशमानय स्वाहा" इति महागणपतिविद्या प्रत्यूहशमनी, मूलाधारे ।।११।।

(महागणपतिमन्त्रस्य गणक ऋषिः, निचृद्गायत्री छन्दः, श्री महागणपतिर्देवता, तत्प्रीत्यर्थे जपे विनियोगः । ध्यानम्—

**बीजापूरगदेक्षुकार्मुकरुचा चक्राब्जपाशोत्पल-**
**व्रीह्यग्रस्वविषाणरत्नकलशप्रोद्यत्कराम्भोरुहः ।**
**ध्येयो वल्लभया सपद्मकरयाश्लिष्टोज्ज्वलद्भूषया**
**विश्वोत्पत्तिविपत्तिसंस्थितिकरो विघ्नेश्वरोऽभीष्टदः ।।**

'ओं नमः शिवायै, ओं नमः शिवाय' इति द्वादशार्णा शिवतत्त्व-विमर्शिनी, हृदये ।।१२।।

(शिवशक्त्यात्मकपञ्चाक्षरमन्त्रस्य वामदेव ऋषिः, पंक्तिच्छन्दः, उमामहेश्वरो देवता, तत्प्रीत्यर्थे जपे विनियोगः । ध्यानम् ।—

**वामांसन्यस्तवामेतरकरकमलायास्तथा वामहस्त-**
**न्यस्तारक्तोत्पलायाःस्तनभरविलसद्वामहस्तः प्रियायाः ।**

**सर्वाकल्पाभिरामः श्रितपरशुमृगेष्टः करैःकाञ्चनाभः**
**ध्येयः पद्मासनस्थः स्मरललितवपुः सम्पदे पार्वतीशः ।।)**

'ओं जुं सः मां पालय-पालय' इति दशार्णा मृत्योरपि मृत्युरे विद्या, फाले ।।१३।।

(अमृतमृत्युञ्जयमन्त्रस्य कहोल ऋषिः, विराट्च्छन्दः, अमृत मृत्युञ्जयसदाशिवो देवता । तत्प्रीत्यर्थे जपे विनियोगः । ध्यानम्–

**स्फुटितनलिनसंस्थं मौलिबद्धेन्दुरेखा–**
**स्रवदमृतरसार्द्रं चन्द्रवन्ह्यर्कनेत्रम् ।**
**स्वकरलसितमुद्रापाशवेदाक्षमालं**
**स्फटिकरजतमुक्तागौरमीशं नमामि ।।)**

'ओं नमो ब्रह्मणे धारणं मे अस्तु निराकरणं धारयिता भूया कर्णयोः श्रुतं मा च्योढ्वं ममामुष्य ओं' इति श्रुतधारिणी विद्या ब्रह्मरन्ध्रे ।।१४।।

(श्रुतधारिणीमन्त्रस्य भार्गव ऋषिः,अनुष्टुप् छन्दः, ब्रह्मा देवता तत्प्रसादसिध्यर्थे जपे विनियोगः । ध्यानम्––

**चतुराननमम्भोजनिषण्णं भारतीसखम् ।**
**अक्षमालावराभीतिकमण्डलुधरं भजे ।।)**

"अं आं ·······अः कं खं·········क्षं' इति सबिन्दुरका रादिक्षकारान्तवर्णमालिकामातृका सर्वज्ञताकरी द्वादशान्ते ।।१५।।

(मातृकामन्त्रस्य ब्रह्मा ऋषिः, गायत्री छन्दः, मातृकासरस्वती देवता, तत्प्रीत्यर्थे जपे विनियोगः । ध्यानम्––

**पञ्चाशता मातृकया ह्यारब्धाखिलदेहगा ।**
**समस्तविद्यारूपिण्या धन्योऽहं मातृकाम्बया ।।)**

पञ्चेमा रश्मयो मूलादिरक्षात्मकतया द्रष्टव्याः ।।

'हसकलह्रीं, हसकहलह्रीं, सकलह्रीं' इति लोपामुद्राविद्या स्वस्वरूपविमर्शिनी, मूलाधारे ।।१६।।

(श्रीहादिलोपामुद्रामन्त्रस्य दक्षिणामूर्त्तिः ऋषिः, पंक्तिच्छन्दः श्रीमहात्रिपुरसुन्दरी देवता, ह ५ बीजम्, ह ६ शक्तिः, स ४ कीलकम् तत्प्रसादसिध्यर्थे जपे विनियोगः । बालया षडङ्गम् ।

ध्यानम्—

**श्रीदेवीभूषितोत्सङ्गं सान्द्रसिन्दूररोचिषम् ।**
**हकारादिमनोर्वाच्यं वन्दे कामेश्वरं हरम् ।।)**

'क्लीं हैं ह्सौः स्हौः हैं क्लीं' इति षट्कूटा सम्पत्करी विद्या, हृदये ।।१७।।

(सम्पत्करीमन्त्रस्य कण्व ऋषिः, गायत्रीच्छन्दः, सम्पत्सरस्वती देवता, तत्प्रसादसिध्यर्थे जपे विनियोगः । ध्यानम्—

**अनेककोटिमातङ्गतुरङ्गरथपत्तिभिः ।**
**सेवितामरुणाकारां वन्दे सम्पत्सरस्वतीम् ।।)**

'सं सृष्टिनित्ये स्वाहा, हं स्थितिपूर्णे नमः, रं महासंहारिणि कृशे चण्डकालि फट्, रं ह्स्ख्फ्रें महानाख्ये अनन्तभास्करि महाचण्डकालि फट्, रं महासंहारिणि कृशे चण्डकालि फट्, हं स्थितिपूर्णे नमः, सं सृष्टिनित्ये स्वाहा, ह्स्ख्फ्रें महाचण्डयोगेश्वरि' इति विद्यापञ्चकरूपिणी कालसंकर्षणी परमायुःप्रदा, फाले ।।१८।।

(चण्डयोगीश्वरीमन्त्रस्य ईश्वर ऋषिः, नानाच्छन्दांसि, चण्डयोगीश्वरी देवता, तत्प्रसादसिध्यर्थे जपे विनियोगः । ध्यानम्—

**सृष्टिस्थिताभ्यां संहृत्या नाख्यया भासया श्रिताम् ।**
**कूलंकषकपोलाढ्यां चण्डयोगीश्वरीं भजे ।।)**

'ऐं ह्रीं श्रीं ह्स्ख्फ्रें ह्सौःअहमहं अहमहं ह्सौःह्स्ख्फ्रें श्रीं ह्रीं ऐं' इति शुद्धज्ञानदा शाम्भवी विद्या । ब्रह्मरन्ध्रे ।।१९।।

(परशम्भुनाथमन्त्रस्य वामदेव ऋषिः, पंक्तिच्छन्दः, परशम्भुनाथो देवता, तत्प्रसादसिध्यर्थे जपे विनियोगः । ध्यानम्—

**पूर्णाहन्तास्वरूपाय तस्मै परमशम्भवे ।**
**आनन्दताण्डवोद्दण्डपण्डिताय नमोनमः ।।)**

'सौः' इयं परा विद्या । द्वादशान्ते ।।२०।।

(परामन्त्रस्य ब्रह्मा ऋषिः, गायत्रीच्छन्दः, परा सरस्वती देवता, तत्प्रसादसिध्यर्थे जपे विनियोगः । ध्यानम्—

**अकलंकशशांकाभा त्र्यक्षा चन्द्रकलावती ।**
**मुद्रापुस्तकलसद्वाहा पातु मां परमा कला ।।)**

एताः पञ्च रश्मयो मूलाद्यधिष्ठानतया कलनीयाः ।

'ऐं क्लीं सौः, सौः क्लीं ऐं, ऐं क्लीं सौः' इति नवाक्षरी श्रीदेव्यङ्ग भूता बाला ।।२१।।

(बालामन्त्रस्य दक्षिणामूर्ति ऋषिः, गायत्रीच्छन्दः, बाला त्रिपु सुन्दरी देवता । तत्प्रसादसिध्यर्थे जपे विनियोगः । ध्यानम्—

**अरुणकिरणजालैरञ्जिताशावकाशा**
**विधृतजपवटीका पुस्तकाभीतिहस्ता ।**
**इतरकरवराढ्या फुल्लकह्लारसंस्था**
**निवसतु हृदि बाला नित्यकल्याणशीला ।।)**

'श्रीं ह्रीं क्लीं ओं नमो भगवति अन्नपूर्णे ममाभिलषितमन्नं दे स्वाहा' इति श्रीदेव्या उपाङ्गभूता अन्नपूर्णा ।।२२।।

(अन्नपूर्णेश्वरीमन्त्रस्य ब्रह्मा ऋषिः, गायत्रीच्छन्दः, अन्नपूर्णेश्व देवता । तत्प्रसादसिध्यर्थे जपे विनियोगः । ध्यानम्—

**आदाय दक्षिणकरेण सुवर्णदर्वीं**
**दुग्धान्नपूर्णामितरेण च रत्नपात्रम् ।**
**अन्नप्रदाननिरतां नवहेमवर्णाम्**
**अम्बां भजे कनकभूषणमाल्यशोभाम् ।।)**

'ओं आं ह्रीं क्रों एहि परमेश्वरि स्वाहा' इयं श्रीदेवीप्रत्यङ्गभू अश्वारूढा ।।२३।।

(अश्वारूढामन्त्रस्य ब्रह्मा ऋषिः, गायत्रीच्छन्दः, अश्वारू देवता । तत्प्रसादसिध्यर्थे जपे विनियोगः । ध्यानम्—

**बद्धा पाशेनांकुशेन कृष्यमाणा स्वसाध्यकम् ।**
**घ्नन्तीं वेत्रेण फालस्त्रक्पाणिमश्वासनां भजे ।।)**

ध्यानान्तरम्—

**अश्वारूढा कराग्रे नवकनकमयीं वेत्रयष्टिं दधाना**
**दक्षेऽन्ये धारयन्ती स्फुरति धनुर्लता पाशहस्ता सुसाध्या**

**देवी नित्यप्रसन्ना शशिशकललसत्केशपाशा त्रिणेत्रा**
**दद्यादद्यानवद्यां श्रियमखिलसुखप्राप्तिहृद्यां श्रियै नः ।।)**

श्री विद्यागुरुपादुकामन्त्रस्तु अन्हिकप्रकरण एवोक्त इह पठितव्यः । तद्यथा--

'ऐं ह्लीं श्रीं ह्स्ख्फ्रें ह स क्ष म ल व र यूं स ह क्ष म ल व र यीं ह्सौः, स्हौः अमुकानन्दनाथश्रीगुरुपादुकां पूजयामि नमः' ।।२४।।

(श्रीविद्यागुरुपादुकामन्त्रस्य दक्षिणामूर्तिः ऋषिः, पंक्तिच्छन्दः, श्रीविद्यागुरुपादुका देवता, तत्प्रसादसिध्यर्थे जपे विनियोगः । ध्यानम्--

**तेजोमयमहाविद्यां शेखराञ्चितमस्तकाम् ।**
**रक्तां चतुर्भुजां वन्दे श्रीविद्यागुरुपादुकाम् ।।)**

अथ मूलविद्या--सा च गुरुमुखादवगता कादिनाम्नी--'कए ईलह्लीं हसकहलह्लीं सकलह्लीं' ।।२५।।

बाला अन्नपूर्णा अश्वारूढा श्रीपादुका चेत्येताभिश्चतसृभिर्युक्ता मूलविद्या साम्राज्ञी मूलाधारे विलोकनीया ।।

(ऋषिच्छन्दोदेवतादिकं गुरुपरम्परातः प्राप्तमवगन्तव्यम् ।)

'ऐं नमः उच्छिष्टचाण्डालि मातङ्गि सर्ववशंकरि स्वाहा' इति-श्यामाङ्गभूता लघुश्यामा ।।२६।।

(लघुश्यामामन्त्रस्य मतङ्ग ऋषिः, विराट्छन्दः, श्रीलघुश्यामाम्बा देवता । तत्प्रसादसिध्यर्थे जपे विनियोगः । ध्यानम्--

**स्मरेत्प्रथमपुष्पिणीं रुधिरबिन्दुशोणाम्बरां**
**गृहीतमधुपात्रिकां मदविघूर्णनेत्राञ्चलाम् ।**
**घनस्तनभरालसां गलितचूलिकां श्यामलां**
**करस्फुरितवल्लकीविमलशंखताटंकिनीम् ।।**
**माणिक्यवीणामुपलालयन्तीं**
**मदालसां मञ्जुलवाग्विलासाम् ।**
**माहेन्द्रनीलद्युतिकोमलांगीम्**
**मातङ्गकन्यां मनसा स्मरामि ।। इति वा ।।)**

'ऐं क्लीं सौः वद वद वाग्वादिनि स्वाहा'। इयं श्यामाङ्
भूता वाग्वादिनी ॥२७॥

(वागीश्वरीमन्त्रस्य कण्व ऋषिः, विराट्छन्दः, वागीश्व
देवता। तत्प्रसादसिध्यर्थे जपे विनियोगः। ध्यानम्——

**अमलकमलसंस्था लेखनीपुस्तकोद्य-**
**त्करयुगलसरोजा कुन्दमन्दारगौरा।**
**धृतशशधरखण्डोल्लासिकोटीरपीठा**
**भवतु भवभयानां भङ्गिनी भारती नः॥)**

'ओं ओष्ठपिधाना नकुलीदन्तैः परिवृता पविः। सर्वस्यै वा
ईशाना चारु मामिह वादयेत्'॥
इयं श्यामाप्रत्यङ्गभूता नकुलीविद्या ॥२८॥

(नकुलीवागीश्वरीमन्त्रस्य कहोल ऋषिः, गायत्रीच्छन्दः, नकुलि
वागीश्वरी देवता, तत्प्रसादसिध्यर्थे जपे विनियोगः। ध्यानम्-

**नकुली वज्रदन्ताली साध्यजिह्वाहिदंशिनी।**
**भक्तवक्तृत्वजननी भावनीया सरस्वती॥)**

श्रीविद्यागुरुपादुकैव प्रथमबीजत्रयस्थाने बालासहिता श्यामागु
पादुका भवति। यथा——

'ऐं क्लीं सौः ह्स्ख्फ्रें हसक्षमलवरयूं सहक्षमलरवयीं ह्सौंः स्हौ
अमुकानन्दनाथश्रीगुरुश्रीपादुकां पूजयामि नमः' ॥२९॥

(श्यामागुरुपादुकामन्त्रस्य मतङ्ग ऋषिः, पक्तिश्छन्दः, श्याम
गुरुपादुका देवता, तत्प्रसादसिध्यर्थे जपे विनियोगः। ध्यानम्—

**वन्दे गुर्वङ्घ्रिमुकुटां श्यामलां शुकपाणिनीम्।**
**समस्तसिद्धिजननीं श्यामलागुरुपादुकाम्॥)**

'ऐं ह्रीं श्रीं ऐं क्लीं सौः ओं नमो भगवति मातङ्गीश्वरि सर्वज
मनोहारि सर्वमुखरञ्जिनि, क्लीं ह्रीं सौः सर्वराजवशंकरि सर्वस्त्री
पुरुषवशंकरि सर्वदुष्टमृगवशंकरि सर्वसत्ववशंकरि सर्वलोकवशंक
(त्रैलोक्यं) अमुकं मे वशमानय स्वाहा सौः क्लीं ऐं श्रीं ह्रीं

इत्यष्टनवतिवर्णा राजश्यामला पूर्वोक्ताभिरङ्गोपाङ्गपादुकेत्येताभिश्च-तसृभिर्विद्याभिस्सहिता हृच्चक्रे यष्टव्या ।।३०।।

**(ऋष्यादिकं गुरुपरम्परातोऽवगन्तव्यम् )**

'लृं वाराहि लृं उन्मत्त भैरवि पादुकाभ्यां नमः' इयं वार्ताल्यङ्ग-भूता लघुवार्ताली ।।३१।।

(लघुवाराहीमन्त्रस्य नारद ऋषिः, पंक्तिश्छन्दः, लघुवाराही देवता, तत्प्रसादसिध्यर्थे जपे विनियोगः। ध्यानम्—

**महार्णवे निपतितामुद्धरन्तीं वसुन्धराम् ।**
**महादंष्ट्रां महाकायां नमाम्युन्मत्तभैरवीम् ।।)**

'ओं ह्लीं नमो वाराहि घोरे स्वप्नं ठः ठः स्वाहा' इयं स्वप्ने शुभाशुभवक्त्री वार्ताल्या उपाङ्गभूता स्वप्नवाराही ।।३२।।

(स्वप्नवाराहीमन्त्रस्य अग्निः ऋषिः, गायत्रीच्छन्दः, स्वप्न-वाराही देवता। तत्प्रसादसिध्यर्थे जपे विनियोगः। ध्यानम्—

**स्वप्ने शुभाशुभं भाति शासन्ती भक्तिकार्ययोः ।**
**दुःस्वप्नहारिणीं वन्दे वाराहीं स्वप्ननायिकाम् ।।)**

'ऐं नमो भगवति महामाये पशुजनमनोवाक्चक्षुस्तिरस्करणं कुरु कुरु हुं फट् स्वाहा' इयं वार्तालीप्रत्यङ्गभूता तिरस्करणी ।।३३।।

(तिरस्करिणीमन्त्रस्य ब्रह्मा ऋषिः, गायत्रीच्छन्दः, तिरस्करिणी देवता, तत्प्रसादसिध्यर्थे जपे विनियोगः। ध्यानम्—

**मुक्तकेशीं विवसनां सर्वाभरणभूषिताम् ।**
**स्वयोनिदर्शनान्मुह्यत्पशुवर्गां नमाम्यहम् ।।)**

'ऐं ग्लौं ह्स्ख्फ्रें हसक्षमलवरयूं सहक्षमलवरयीं ह्सौः स्हौः अमुकानन्दनाथश्रीपादुकां पूजयामि नमः'। एषा वार्ताली-गुरुपादुका ।।३४।।

(वाराहीगुरुपादुकामन्त्रस्य ब्रह्मा ऋषिः गायत्रीच्छन्दः, वाराही-गुरुपादुकादेवता, तत्प्रसादसिध्यर्थे जपे विनियोगः। ध्यानम्—

**देशिकांघ्रिलसन्मौलिं खड्गिनीञ्च कपालिनीम् ।**
**भावयामि घनच्छायाँ पञ्चमीगुरुपादुकाम् ।।)**

'ऐं ग्लौं ऐं नमो भगवति वार्तालिवार्तालि वाराहि वाराहि वराह मुखि वराहमुखि अन्धे अन्धिनि नमः। रुन्धे रुन्धिनि नमः। जम्भे जम्भिनि नमः। मोहे मोहिनि नमः। स्तम्भे स्तम्भिनि नमः। सर्वदुष्टप्रदुष्टानां सर्वेषां सर्ववाक्चित्तचक्षुर्मुखगतिजिह्वास्तम्भनं कुरु करु शीघ्रं वश्यं ऐं ग्लौं ठः ठः ठः ठः हुँ अस्त्राय फट्' इति द्वादशोत्तर शताक्षरो महावाराहीमन्त्रः ।।३५।।

(पूर्वोक्ताभिश्चतसृभिर्युक्तेयं महावाराही आज्ञाचक्रे परिपूज्या।)

प्रथमद्वितीयकूटयोः हृल्लेखावर्जं पञ्चदश्येव त्रयोदशाक्षरी श्रीपूर्तिविद्या ब्रह्मरन्ध्रे यष्टव्या।

तद्यथा—'क ए ई ल ह स क ह ल स क ल ह्रीं' इयं कादिपूर्तिविद्या

'ह स क ल ह स क ह ल स क ल ह्रीं' इयं हादिपूर्तिविद्या ।।३६।।

(श्रीपूर्तिविद्यामन्त्रस्य दक्षिणामूर्ति ऋषिः, पंक्तिश्छन्दः, श्री पूर्तिविद्या देवता, तत्प्रसादसिध्यर्थे जपे विनियोगः।)

प्रथमत्रिकस्थाने त्रितारी कुमारी वाक् ग्लौं इत्यष्टबीजपूर्वा श्रीगुरु पादुकैव महापादुका सर्वमन्त्रसमष्टिरूपिणी स्वैक्यविमर्शिनी महा-सिद्धिप्रदायिनी द्वादशान्ते वरिवस्या। यथा—

"ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं ग्लौं ह्स्ख्फ्रें हसक्षमलवरयूं सहक्षमलवरयीं ह्सौः स्हौः अमुकानन्दनाथश्रीगुरुपादुकां पूजयामि नमः' ।।३७।।

(महापादुकामन्त्रस्य दक्षिणामूर्ति ऋषिः, पंक्तिश्चछन्दः, श्री महापादुका देवता, तत्प्रसादसिध्यर्थे जपे विनियोगः।

ध्यानम्—

**सर्वविद्यामयीं सर्वशक्तिपीठस्वरूपिणीम्।**
**कराग्रे हृदये मूले देशिकांघ्रियुगत्रयम्।।**
**दधतीं दीप्तभूषाढ्यां श्रीमहापादुकां नमः।।)**

इति ऋष्यादिसहितरश्मिमाला। रश्मिमालामन्त्रा आहत्य सप्तत्रिंशत्। एते ब्राह्मे मुहूर्ते सकृदावर्तनीयाः। सर्व एवेमे मन्त्राः श्रीगुरुमुखादवगत्यैव पठिताः महते श्रेयसे, नान्यथेति शिवशासनम्।

पुस्तके लिखितान् मन्त्रानवलोक्य जपेत्तु यः ।
स जीवन्नेव चाण्डालो मृतःश्वा चाभिजायते ।।

इति सांख्यायनतन्त्रवचनेन गुरुमुखागमं विना जपस्य निषेधात् ।।

## प्रातःकृत्यम्

### भूप्रार्थनादिमुखक्षालनान्तम्

प्रातः प्रभृति सायान्तं सायादिप्रातरन्ततः ।
यत्करोमि जगद्योने तदस्तु तव पूजनम् ।।
समुद्रवसने देवि पर्वतस्तनमण्डिते ।
विष्णुपत्नि नमस्तुभ्यं पादचारं क्षमस्व मे ।।

इति भूमिं संप्रार्थ्य धरणीतलन्यस्त (वाम) नाड़ीपार्श्वमुत्थाय ग्रामाद्बहिः स्मार्तेन विधिना निर्वर्तितशौचक्रमः,

आयुर्बलं यशो वर्चः प्रजा पशुवसूनि च ।
ब्रह्मप्रज्ञाञ्च मेधाञ्च त्वं नो देहि वनस्पते ।।

इति मन्त्रेण दन्तधावनकाष्ठमभिमन्त्र्य 'ऐं ह्रीं श्रीं क्लीं कामदेवाय सर्वजनप्रियाय नमः' इति मन्त्रेण दन्तधावनम्, ऐं ह्रीं श्रीं हृल्लेखया जिह्वोल्लेखनं च विधाय कफविमोचननासाशोधनदूषिकानिरसनपूर्वकं विहितविंशतिगण्डूषः 'ऐं ह्रीं श्रीं श्रीं, ऐं ह्रीं श्रीं श्रों श्रीं ह्रीं श्रीं कमले कमलालये प्रसीद प्रसीद श्रीं ह्रीं श्रीं श्रों महालक्ष्म्यै नमः, ऐं ह्रीं श्रीं श्रीं ह्रीं क्लीं, ऐं ह्रीं श्रीं श्रीं सहकलह्रीं श्रीं' इति मन्त्र-चतुष्टयेन मुखं प्रक्षाल्य यथा स्मृत्याचामेत् ।

### स्नानविधिः

ततो नद्यादौ वैदिकस्नानोत्तरं श्रीललिताप्रीत्यर्थं तान्त्रिकस्नानं करिष्य इति संकल्प्य, जले पुरतो हस्तमात्रं चतुरश्रमण्डलं परिगृह्य तत्र—

ब्रह्माण्डोदरतीर्थानि करैःस्पृष्टानि ते रवे ।
तेन सत्येन मे देव तीर्थं देहि दिवाकर ।।

इति सूर्यमभ्यर्च्य,

**आवाहयामि त्वां देवि स्नानार्थमिह सुन्दरि ।**
**एहि गङ्गे नमस्तुभ्यं सर्वतीर्थसमन्विते ।।**

इति गङ्गामर्थयित्वा ऐं ह्रीं श्रीं ह्वां ह्वीं ह्वूं ह्वैं ह्वौं ह्वः क्रों इत्यंकुश मुद्रया सूर्यमण्डलं भित्वा ततो गङ्गादिसर्वतीर्थावगाहनोत्तरं वं इति सलिलबीजेन सप्तवारमभिमन्त्र्य मुहुर्मुहुरावर्तयन् मूर्धनि त्रीनुद काञ्जलीन् दत्वा त्रींश्च पीत्वा, मूलपूर्वं श्रीललितां तर्पयामीति त्रिस्तर्पणं मूलेन त्रिःप्रोक्षणञ्चात्मनो योनिमुद्रया विदध्यात् ।

गृहे तु विना तर्पणम् । अशक्तौ च स्मार्तेन पथा मन्त्रभस्मनो- रन्यतरन्निर्वर्त्य मूलेन त्रिराचमनप्रोक्षणे केवलं कुर्यात् ।

## सन्ध्याविधिः

अथ धौते वाससी परिधाय विधृतपुण्ड्रः वैदिकीं सन्ध्यामभिवन्द्य तान्त्रिकीमाचरेत् । यथा—मूलेन त्रिराचम्य द्विः परिमृज्य सकृदुप- स्पृश्य चक्षुषी नासिके श्रोत्रे अंसौ नाभिं हृदयं शिरश्चाभिमृशेत् । एवं त्रिराचम्य पूर्ववत्प्राणानायम्य त्रिरात्मानञ्च प्रोक्ष्य अञ्जलिना सलिलमादाय 'ऐं ह्रीं श्रीं ह्रां ह्रीं ह्रूं सः मार्तण्डभैरवाय प्रकाश- शक्तिसहिताय स्वाहा' इति मन्त्रेण उदयते विवस्वते त्रिरर्घ्यं दत्वा तन्मण्डले श्रीचक्रमनुचिन्त्य तत्र ध्यायेत्—

**ध्यायेत्कामेश्वरांकस्थां कुरुविन्दमणिप्रभाम् ।**
**शोणाम्बरस्रगालेपां सर्वाङ्गीणविभूषणाम् ।।**
**सौन्दर्यशेवधिं सेषुचापपाशांकुशोज्ज्वलाम् ।**
**स्वभाभिरणिमाद्याभिः सेव्यां सर्वनियामिकाम् ।।**
**सच्चिदानन्दवपुषं सदयापाङ्गविभ्रमाम् ।**
**सर्वलोकैकजननीं स्मेरास्यां ललिताम्बिकाम् ।।**

(अत्रायुधानां क्रमः स्वरूपञ्च सपर्याप्रकरणे वक्ष्यते)

ततः—'ऐं ह्रीं श्रीं क ए ई ल ह्रीं त्रिपुरसुन्दरि विद्महे,
ऐं ह्रीं श्रीं ह स क ह ल ह्रीं पीठकामिनि धीमहि,
ऐं ह्रीं श्रीं स क ल ह्रीं तन्नः क्लिन्ने प्रचोदयात्'

इति मन्त्रेण महेश्यै त्रिरर्घ्यं दत्वा मूलेन त्रिस्सन्तर्प्य मूलेन पूर्व-वदाचम्य जपप्रकरणे वक्ष्यमाणान् ऋष्यादीन् न्यस्य मूलमष्टोत्तर-शतवारमावर्तयेत्। ततः पुनः कराङ्गन्यासादिकं कृत्वा जपं वक्ष्य-माणमन्त्रेण श्रीदेव्यै समर्प्याचम्य मण्डलस्थं तीर्थं विसर्जनमुद्रया सूर्ये विसृजेत्। अथ सपर्यासाधनानि सम्पाद्य ब्रह्मयज्ञादि निर्व-र्तयेत् इति शिवम्॥

**प्रथममाह्निकप्रकरणं समाप्तम्**

## श्रीविद्यासपर्याप्रकरणम्

श्रीगुरुभ्यो नमः श्रीमन्महागणपतये नमः श्रीमद्राजराजेश्वर्यै नमः।

ओं नमो ब्रह्मादिभ्यो ब्रह्मविद्यासम्प्रदायकर्तृभ्यो वंशर्षिभ्यो नमो गुरुभ्यः। सर्वोपप्लवरहितप्रज्ञानधनः प्रत्यगर्थो ब्रह्माहमस्मि।

**श्रीनाथादिगुरुत्रयं गणपतिं पीठत्रयं भैरवं**
**सिद्धौघं वटुकत्रयं पदयुगं दूतीक्रमं मण्डलम्।**
**वीरद्व्यष्टचतुष्कषष्टिनवकं वीरावलीपञ्चकं**
**श्रीमन्मालिनि मन्त्रराजसहितं वन्दे गुरोर्मण्डलम्॥**
**आब्रह्मलोकादाशेषादालोकालोकपर्वतात्।**
**ये वसन्ति द्विजा देवास्तेभ्यो नित्यं नमाम्यहम्॥**

### मन्दिरप्रवेशादिशिखाबन्धनान्तम्

संयतस्साधको रङ्गवल्याद्यलंकृतस्य धूपादिसुरभिलस्य बद्धवितान कुसुमस्रजोमण्डलस्य पश्चिमद्वारे तिष्ठन् दक्षवामोर्ध्वभागेषु क्रमेण—

ओं ऐं ह्रीं श्रीं भं भद्रकाल्यै नमः
" " " " भं भैरवाय नमः
" " " " लं लम्बोदराय नमः

इति द्वारदेवतास्सम्पूज्य विधृतारुणवसनाभरणानुलेपनमाल्यस्सं-कल्पमात्रकलिपताकल्पो वा ताम्बूलादिभिः सुरभिलवदनस्समास्तीर्णे मृदुनि शुचिनि बालाबीजेन द्वादशवारमभिमन्त्रिते मूलमन्त्रोक्षिते शुभा-

सने ऐं ह्रीं श्रीं आधारशक्तिकमलासनाय नम इति पुष्पाक्षतैरभिपूज्य,

'नमो गुरुभ्यो गुरुपादेभ्यो नमः परेभ्यः परपादुकाभ्यः, आचा सिद्धेश्वरपादुकाभ्यो नमोऽस्तु लक्ष्मीपतिपादुकाभ्यः' इत्यासना जलादिना त्रिकोणं विलिख्य ऐं ह्रीं श्रीं आधारशक्तिकमलासनाय न इत्याधारशक्तिं सम्पूज्य कुशकम्बलादधः पृथ्वीति मन्त्रस्य मेरुपृ ऋषिः कूर्मो देवता सुतलं छन्दः आसने विनियोगः ।

**पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता ।**
**त्वञ्च धारय मां देवि पवित्रं कुरु चासनम् ॥**

इत्याधारशक्तिं सम्प्रार्थ्य, भूर्भुवः स्वः इत्यासनं सम्प्रोक्ष्य तदुप प्राङ्मुख उदङ्मुखो वोपविशेत् । आचम्य प्राणानायम्य, ओं अनन्त सनाय नमः, कूर्मासनाय नमः, विमलासनाय नमः, पद्मासनाय नम योगासनाय नमः, आधारशक्त्यै नमः, दुष्टविद्रावणनृसिंहासनाय न मध्ये परमसुखासनाय नमः इति नमस्कृत्य,

**ऊर्ध्वकेशि विरूपाक्षि मांसशोणितभोजने ।**
**तिष्ठ देवि शिखाबन्धे चामुण्डे ह्यपराजिते ॥**

इति शिखां बध्नीयात् ।

## बाह्यभूतशुद्धिः

**अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः ।**
**ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥**
**अपक्रामन्तु भूतानि पिशाचाः सर्वतो दिशम् ।**
**सर्वेषामविरोधेन पूजाकर्म समारभे ॥**

इति भूतान्युत्सार्य,

**तीक्ष्णदंष्ट्र महाकाय कल्पान्तदहनोपम ।**
**भैरवाय नमस्तुभ्यमनुज्ञां दातुमर्हसि ॥**

इति भैरवाज्ञां गृहीत्वा स्थलशुद्धिं कूर्यात् । मण्डपं विचिन्त तत्राचतुर्द्वारं विचिन्त्य 'ओं अन्तरितं रक्षो अन्तरिता अरातयः हुं फट् इति मण्डपान्तोऽक्षतान् क्षिपेत् ।

मूलं पठन् दिव्यदृष्टयवलोकनेन दिव्यान् विघ्नानुत्सारयामि, ओं फडिति प्रोक्षणेनान्तरिक्षान् विघ्नानुत्सारयामि, ओं फडिति वामपादपार्ष्णिघातेन भौमान् विघ्नानुत्सारयामि इति विघ्नानुत्सारयेत्। 'ओं अस्त्राय फट्' इति तालत्रयेण दिग्बन्धनं कृत्वा 'ओं नमः सुदर्शनाय अस्त्राय फट्' इति मन्त्रेण छोटिकया वन्हिप्राकारत्रयं विभावयेत्।

पूज्यपूजकयोर्मध्यं प्रतीचीति नियमः—

**यदाशाभिमुखो मन्त्री त्रिपुरां परिपूजयेत्।**
**देवीपश्चात्तदा प्राची प्रतीची त्रिपुरापुरः॥**

इति कुलार्णवोक्तेः।

## तत्त्वाचमनम्

ऐं ह्रीं श्रीं ऐं क ए ई ल ह्रीं आत्मतत्त्वं शोधयामि स्वाहा,
" " " क्लीं ह स क ह ल ह्रीं विद्यातत्त्वं " "
" " " सौः सकल ह्रीं शिवतत्त्वं शोधयामि स्वाहा
" " " ऐं क ए ई ल ह्रीं क्लीं ह स क ह ल ह्रीं सौः स क ल ह्रीं सर्वतत्त्वं शोधयामि स्वाहा। अथवा—
ऐं ह्रीं श्रीं क ए ई ल ह्रीं आत्मतत्त्वं शोधयामि "
" " " " ह स क ह ल ह्रीं विद्यातत्त्वं "
" " " स क ल ह्रीं शिवतत्त्वं "
" " " क ए ई ल ह्रीं, ह स क ल ह्रीं, स क ल ह्रीं सर्व तत्त्वं शोधयामि स्वाहा इत्याचमेत्।

## गुरुपादुकामन्त्रः

"ओं ऐं ह्रीं श्रीं ह्स्ख्फ्रें हसक्षमलवरयूं सहक्षमलवरयीं ह्सौः स्हौः अमुकानन्दनाथश्रीगुरुपादुकां पूजयामि नमः, स्वरूपनिरूपण हेतवे गुरवे, स्वच्छप्रकाशहेतवे परमगुरवे, स्वात्मारामपञ्जरविलीन चेतसे परमेष्ठिगुरवे नमः" इति गुरुपादुकामन्त्रं पठित्वा,

**हे घण्टे सुस्वरे पीठे घण्टाध्वनिविभूषिते।**
**वादयन्ति परानन्दे घण्टादेवं प्रपूजयेत्॥**

**आगमार्थञ्च देवानां गमनार्थन्तु रक्षसाम् ।**
**कुर्याद्धण्टारवं तत्र देवताह्वानलाञ्छनम् ।।**

इति घण्टां वादयेत् ।

## सङ्कल्पः

**शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।**
**प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ।।**

मूलेन प्राणानायम्य तिथिवारनक्षत्रादिकं संकीर्त्य मम श्रीललित प्रसादसिध्यर्थं यथासम्भवद्रव्यैः यथाशक्ति सपर्याक्रमं निर्वर्तयिष्ये इ संकल्प्य,

## देहरक्षा

'ऐं ह्लीं श्रीं महात्रिपुरसुन्दरि आत्मानं रक्ष-रक्ष' इति देहे त्रिव्य पकं कुर्यात् । 'गुं गुरुभ्यो नमः' दक्षबाहौ, 'गं गणपतये नमः' वामबाह 'दुं दुर्गायै नमः' दक्षोरौ, 'रं बटुकाय नमः' वामोरौ,'यं योगिनीभ्यो नम पादयोः, 'क्षं क्षेत्रपालाय नमः' नाभौ, 'पं परमात्मने नमः' हृदये, 'ऐं ह श्रीं श्रों नमो भगवति तिरस्कारिणि महामाये महानिद्रे सकलपशुज मनश्चक्षुःश्रोत्रतिरस्करणं कुरु कुरु स्वाहा हुं फट्' इति परितो वन्हि प्राकारं विभाव्य, भूर्भुवः स्वरिति दिग्बन्धं कुर्यात् । 'ऐं ह्लीं श्र समस्तप्रकट गुप्तगुप्ततर सम्प्रदाय कुलोत्तीर्ण निगर्भ रहस्यातिरहस्यपर परातिरहस्ययोगिनीदेवताभ्यो नमः' इति पुष्पाञ्जलिं दत्वा, 'ऐं ह्लीं श्र ऐं ह्नः अस्त्राय फट्' इति मन्त्रेण मुहुरावृत्तेनांगुष्ठादिकनिष्ठिकान करतलयोः कूर्परयोः देहे च व्यापकं कुर्यात् ।

ऐं ह्लीं श्रीं श्रीगुरो दक्षिणामूर्ते ममानुग्रहकारकअनुज्ञां दे भगवन् श्रीचक्रयजनाय मे ।।

ऐं ह्लीं श्रीं—

**अतिक्रूर महाकाय कल्पान्तदहनोपम ।**
**भैरवाय नमस्तुभ्यमनुज्ञां दातुमर्हसि ।।**

## चक्रपरिकल्पनं प्राणप्रतिष्ठा च

**'बिन्दुत्रिकोण - वसुकोण - दशारयुग्म - मन्वस्त्र - नागदल - संयुत-षोडशारम् । वृत्तत्रयञ्च धरणीसदनत्रयञ्च श्रीचक्रमेतदुदितं परदेवतायाः'** ।। इत्युक्तरीत्या श्रीचक्रं परिकल्प्य, 'ऐं ह्लीं श्रीं आों आां ह्लीं क्रों यं रं लं वं शं षं सं हं आों हंसः सोऽहं हंसः शिवः श्रीचक्रस्य प्राणा इह प्राणाः, ऐं ह्लीं श्रीं आों आां ह्लीं क्रों श्रीचक्रस्य जीव इह स्थितः सर्वेन्द्रियाणि वाङ्मनश्चक्षुःश्रोत्रजिह्वाघ्रणानि इहैवागत्य अस्मिश्चक्रे सुखं चिरं तिष्ठन्तु स्वाहा । ऐं ह्लीं श्रीं आों **असुनीते पुनरस्मासु चक्षुः पुनः प्राणमिह नो धेहि भोगम् । ज्योक् पश्येम सूर्यमुच्चरन्तमनुमते मृलयानस्वस्ति'।। इति प्राणप्रतिष्ठां कुर्यात् ।**

अथ चक्रराजे मन्दिरपूजां कुर्यात् ।*

## मन्दिरपूजा

ऐं ह्लीं श्रीं अमृताम्भोनिधये नमः, रत्नद्वीपाय नमः, नानावृक्ष-महोद्यानाय नमः, कल्पवाटिकायै नमः, सन्तानवाटिकायै, हरिचन्दन-वाटिकायै, मन्दारवाटिकायै, पारिजातवाटिकायै, कदम्बवाटिकायै, पुष्परागरत्नप्राकाराय, पद्मरागरत्नप्राकाराय, गोमेधकरत्नप्राकाराय वज्ररत्नप्राकाराय, वैडूर्यरत्नप्राकाराय, इन्द्रनीलरत्नप्राकाराय, मुक्तारत्नप्रकाराय, मरकतरत्नप्राकाराय, विद्रुमरत्नप्राकाराय, माणिक्यमण्डपाय सहस्रस्तम्भमण्डपाय, अमृतवापिकायै, आनन्द-वापिकायै, विमर्शवापिकायै, बालातपोद्गाराय, चन्द्रिकोद्गाराय, महाशृङ्गारपरिघायै, महापद्माटव्यै, चिन्तामणिमयगृहराजाय, पूर्वाम्नायमयपूर्वद्वाराय, दक्षिणाम्नायमयदक्षिणद्वाराय, पश्चिमाम्नायमय पश्चिमद्वाराय, उत्तराम्नायमयोत्तरद्वाराय, रत्नदीपवलयाय, मणिमय सिंहासनाय, ब्रह्ममयैकमञ्चपादाय, विष्णुमयैकमञ्चपादाय, रुद्रमयैक मञ्चपादाय, ईश्वरमयैकमञ्चपादाय, सदाशिवमयैकमञ्चफलकाय, हंसतूलतूलिकायै, हंसतूलमहोपधानाय, कौसुम्भास्तरणाय, महावितान-काय, ऐं ह्लीं श्रीं महायवनिकायै नमः ।

---

* सर्वत्र चतुर्थ्यन्त पदात्पूर्वं त्रितारीम् अनन्तरञ्च नमः पदमुच्चारयेत् ।

## दीपपूजा

अथ जलपूर्णं वर्धनीपात्रं स्ववामभागे गन्धपुष्पाक्षतादिसाम
स्वदक्षभागे च निधाय दीपानभितः दीपौ दीपं वा प्रज्वालयेत् ।—

**घृतदीपो दक्षिणे स्यात्तैलदीपस्तु वामतः ।**
**सितवर्तियुतो दक्षे वामतो रक्तवर्तिकः ।।**

इति नियमः । दक्षवामभागौ देव्या एव ।

ततो ऐं ह्रीं श्रीं मूलेन श्रीचक्रे पुष्पाञ्जलिं दत्वा मूलस्य त्रिभि
कूटैः स्वाग्रेशानाग्नेयक्रमेण कोणेषु संपूज्य भूतशुद्धिं कुर्यात् ।

## भूतशुद्धिः

यथा—सुषुम्ना वर्त्मना वायुमाकृष्य हुं बीजेन मूलाधारस्थपद्मस्थि
त्रिकोणस्थितज्योतिर्मयलिङ्गं परिवेष्टच्य स्थितां सार्धत्रिवलयां कुण्ड
लिनीं विद्युत्पुञ्जपिञ्जरां विवस्वदयुतभास्वत्प्रकाशां परःशतसुधा
मयूखशीतलां तेजस्स्वरूपामुत्थाप्य 'जीवशिवं परमशिवे संयोजयामि
स्वाहा' इति मन्त्रेण दीपकलिकाकारं हृदिस्थं जीवं कुण्डलिनीमुखे
ब्रह्मरन्ध्रं नीत्वा परमशिवेनैकीभूतं हंसः सोऽहमिति भावयन् वायु
मिडया रेचयेत् । ततो वामकुक्षिस्थितं पापपुरुषमंगुष्ठपरिमाण
विप्रहत्याशिरोयुक्तं कनकस्तेयबाहुकं मदिरापानहृदयं गुरुतल्प
कटीयुक्तं तत्संयोगिपरद्वन्द्वमुपपातकरोमकं खड्गचर्मधरं दुष्टमधो
वक्त्रं चिन्तयेत् । ततो यं यं इति वायुबीजं स्मरन् वायुं पिङ्गलया
पूर्यैनं शोषयेत् । ततो रं रं इति वन्हिबीजेन पूरकयेक्षया द्विगुणित
कालं कुम्भकं विधाय पापपुरुषं दहेत् । पुनश्च यं इति वायुबीज
ततोऽप्यधिककालं जपित्वेडया तद्भस्म रेचकेन बर्हिनिष्कासयेत्
ब्रह्मरन्ध्रगते चन्द्रमण्डलेऽमृतवर्षिणीं भवानीं भूमिशुध्यर्थं भावयेत्
ततस्तन्मौलिनिः - स्यन्दसुधाकल्लोलवृष्टिभिश्चिन्तयेन्मनसाऽऽत्मनम्
इयं भूमिशुद्धिः । ततश्च स्वशिरसि कामेश्वरीकामेश्वरयोः रक्तशुक्ल
चरणन्यासं भावयित्वा तदमृतक्षरणेन सबाह्याभ्यन्तरमात्मानं भावये
दिति भूशुद्धिः ।

अत्र केचिद्वदन्ति––मातृकाः प्रणवे भूतानि च ब्रह्मरन्ध्रे प्रविलाप्य सच्चिन्मयो भूत्वा पापपुरुषं चिन्तयेत्। पापपुरुषोत्थं भस्म वं इति सुधाबीजेन सम्प्लावयेत्। लं लं इति भूबीजेन तद्भस्म कनकाण्डवद् घनीभावमापाद्य विशुद्धमुकुराकारं ब्रह्मरन्ध्रगतं तत्स्मरेत्। आकाशादीनि भूतानि पुनरुत्पादयेत्। ततोऽखण्डं ब्रह्म, तस्मात्तत्प्रेरकः पुरुषः, ततः प्रकृतिः, प्रकृतेर्महान्, ततोऽहंकारः, ततोऽहं त्रिगुणात्मकः, तत आकाशः, आकाशाद्वायुः, वायोस्तेजः, तेजसो जलम्, जलात्पृथ्वी, पृथ्व्या ओषधयः, ओषधीभ्योऽन्नम्, अन्नाद्रेतः, रेतसः पुरुषः, पुरुषोऽन्नरसमयः हंसः सोऽहमिति कुण्डलिनीं जीवमादाय परसङ्गात्सुधामयीं संस्थाप्य हृदयाम्भोजे मूलाधारगतां स्मरेदिति।

वयन्तु पापपुरुषोत्थभस्मनस्सकाशादप्रामाणिकतमोमहदाद्युत्पत्यपेक्षया पापपुरुषदाहोत्थं भस्म पार्थिवप्रपञ्चेन साकं पृथिव्यां प्रविलीयते, पृथिव्यादिकं क्रमेण ब्रह्मणि प्रविलीयते, ततस्तमोमहदादीनामुत्पत्तिरिति युक्तं पश्यामः, अत्र श्रुतिस्मृतिप्रमाणबहुलस्योपलब्धेः।

मन्त्रमहार्णवरीत्या तु––स्वशरीरयुतं पापं रं इति वह्निबीजेन कुम्भके दहेत्, ततो रेचके स्वशरीरात् पापोत्थं भस्म बहिर्निष्कासयेत्। ततो देहोत्थं भस्म वं इति सुधाबीजेन सम्प्लाव्य लं बीजेन घनीभूतं पिण्डं कृत्वा कनकाण्डवद्भावयेत्। ततो मूर्धादिनखान्ताः देहावयवा मनसा रचनीया इति।

वस्तुतस्तु देहोत्थभस्मपिण्डं पृथिव्यां पृथिव्यादिकं सर्वं जगद्ब्रह्मणि विलाप्य ततो महदादिक्रमेण पञ्च भूतानि समुत्पाद्य ततो दिव्यदेहं रचयेदित्येव शोभनम्। अत एवेडया लं वं रं यं हं इति पञ्च भूतबीजानि स्मरन् हंसः सोऽहमिति च स्मरन् उपसंहारक्रमेण मातृका भूतानि प्रणवे ब्रह्मणि चक्रं विलापयेत्। तद्यथा––सकारं हकारे, हकारं सकारे, सकारं षकारे, षकारं शकारे, शकारं वकारे, वकारम् अःकारे, अःकारं अंकारे, अंकारं अकारे, अकारं ब्रह्मरन्ध्रे प्रणवात्मके ब्रह्मणि प्रविलापयेत्।

## भूतोपसंहारः

पादादिजानुपर्यन्तं चतुष्कोणं लं बीजाढ्यं स्वर्णवर्णं स्मरेद
निमण्डलम् । जान्वोरुपरि नाभिपर्यन्तं चन्द्रार्धनिभं पद्मद्वयाकृति
बीजयुक्तं श्वेताभं मं सोममण्डलं स्मरेत् । नाभेर्हृदयपर्यन्तं त्रिको
स्वस्तिकासनं रं बीजेन युतं रक्तं स्मरेत् पावकमण्डलम् । हृदो भ्रूमध्य
पर्यन्तं वृत्तं षड्बिन्दुलाञ्छितं यं बीजयुक्तं धूम्राभं वायव्यं मण्ड
स्मरेत् । आब्रह्मरन्ध्रं भ्रूमध्याद्वृत्तं स्वच्छं मनोहरं हं बीजयुक्तमाका
मण्डलञ्च विचिन्तयेत् । एवं भूतानि विचिन्त्य प्रत्येकं स्वकार
प्रविलापयेत्––भुवं जले, जलं वन्हौ, वन्हिं नभसि, अमुम् अहंका
महत्तत्वेऽप्यहंकृतं, महान्तं प्रकृतौ, मायामात्मनि च प्रविलापयेत् ।

पुनश्च वमित्यमृतबीजेनेडया वायुमापूर्य तस्मादेव ब्रह्मणस्तमो
महदादिक्रमेण भूतान्युत्पाद्य तैर्दिव्यमुपासनोपयोगि देहमुत्पादयेत्
तथा हि––ब्रह्मणोऽव्यक्तं, ततो महान्, महतोऽहंकारः, तत आकाश
ततो वायुः, वायोरग्निः, अग्नेरापः, ततो भूः इति दिव्यैः पञ्चभूतै
र्दिव्यभावनया यं दिव्यदेहोत्पत्तिं भावयेत् । ततः कुण्डलिनीं ब्रह्म
रन्ध्रादवतार्य हृदयाम्भोजे जीवं निधाय मूलाधारस्थितां कुण्डलिनीं
विभावयेदिति भूतशुद्धिः ।

## आत्मप्राणप्रतिष्ठा

अथ हृदि हस्तं दत्वा आंआं ह्रीं क्रों मम सर्वेन्द्रियाणि,आं आं ह्रीं
क्रों मम वाङ्मनस्त्वक्चक्षुःश्रोत्रजिह्वाघ्राणप्राणा इहागत्य सुखं चि
तिष्ठन्तु स्वाहा । ततो मम गर्भाधानादिपञ्चदशसंस्कारसिध्यर्थं
पञ्चदशामुकमन्त्रावृत्तीः करिष्य इति संकल्प्य पञ्चदशवारं प्रण
स्वेष्टं मन्त्रं वा आवर्तयेत् ।

**रक्ताम्भोधिस्थपोतोल्लसदरुणसरोजाधिरूढा कराब्जैः**
**पाशं कोदण्डमिक्षूद्भवमथगुणमप्यंकुशं पञ्चबाणान् ।**
**बिभ्राणाऽसृक्कपालं त्रिनयनलसिता पीनवक्षोरुहाढ्या**
**देवी बालार्कवर्णा भवतु सुखकरी प्राणशक्तिः परा नः ।।**

इति प्राणप्रतिष्ठा ।

नित्योत्सवरीत्या पाञ्चभौतिकं संकोचशरीरमेव यमिति वायु-बीजेन शोषितं विभाव्य रं बीजेन प्लुष्टं भस्मीकृतं विभाव्य वमित्य-मृतबीजेन तद्भस्म सहस्रारेन्दुमण्डलविगलदमृतरसेन सिक्तं विभाव्य लमिति भूबीजेन तद्भस्मना शाम्भवं दिव्यं शरीरमुत्पन्नं विभाव्य हंसः सोऽहम् इति शिवपदाज्जीवमवतार्य मूलाधारे स्थापितं भावयेत् । तस्मिन्नेव आं सोऽहमिति त्रिःपठित्वा प्राणप्रतिष्ठां कुर्यात् ।

मूलेन षोडशधा दशधा त्रिधा वा प्राणानायच्छेत् ।

'ऐं ह्रीं श्रीं' **अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः ।**
**ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ।।**

इत्युच्चार्य युगपद्वामपार्ष्णिभूतलाघातत्रय-करास्फोटनत्रय-क्रूर-दृष्ट्यवलोकन-तालत्रयेण भौमान्तरिक्षदिव्यान् भेदावभासकान् विघ्ना-नुत्सारयेत् । अथ नम इत्यंगुष्ठमन्त्रमुच्चारयन् अंकुशेन शिखां बद्ध्वा श्रीदेवीरूपं भावयन्नात्मानं स्वदेहे न्यासजालात्मकं वज्रकवचं विदधीत।

## न्यासाः

तत्रादौ मातृकान्यासाः—

अस्य श्रीमातृकान्यासमहामन्त्रस्य ब्रह्मणे ऋषये नमः, (शिरसि) गायत्र्यै छन्दसे नमः, (मुखे) श्रीमातृकासरस्वत्यै देवतायै नमः, (हृदये) हल्भ्यो बीजेभ्यो नमः, (गुह्ये) स्वरेभ्यः शक्तिभ्यो नमः, (पादयोः) बिन्दुभ्यः कीलकेभ्यो नमः (नाभौ) मम श्रीविद्याङ्गत्वेन न्यासे विनियोगाय नमः, (करसम्पुटे)सर्वमातृकया त्रिर्व्यापकं सर्वाङ्गेऽ-ञ्जलिना ।

ऐं ह्लीं श्रीं ऐं क्लीं सौः अं कं खं गं घं ङं आं अंगुष्ठाभ्यां नमः;
हृदयाय नमः ।
,, ,, ,, ,, ,, ,, इं चं छं जं झं ञँ ईं तर्जनीभ्यां नमः ;
शिरसे स्वाहा ।
,, ,, ,, ,, ,, ,, उं टं ठं डं ढं णं ऊं मध्यमाभ्यां नमः;
शिखायै वषट् ।
,, ,, ,, ,, ,, ,, एं तं थं दं धं नं ऐं अनामिकाभ्यां नमः;
कवचाय हुम् ।

ऐं ह्रीं श्रीं ऐं क्लीं सौः ओं पं फं बं भं मं औं कनिष्ठिका
नमः ; नेत्रत्रयाय वौषट् ।
,, ,, ,, ,, ,, ,, अं यं रं लं वं शं षं सं हं क्षं अः करत
करपृष्ठाभ्यां नमः ; अस्त्राय फट् ।

ध्यानम्—

**पञ्चाशद्वर्णभेदैर्विहितवदनदोःपादयुक्कुक्षिवक्षो**
**देशां भास्वत्कपर्दाकलितशशिकलामिन्दुकुन्दावदाता**
**अक्षस्रक्कुम्भचिन्तालिखितवरकरां त्रीक्षणामब्जसंस्था-**
**मच्छाकल्पामतुच्छस्तनजघनभरां भारतीं तां नमामि**

(दक्षोर्ध्वकरमारभ्य दक्षाधःकरपर्यन्तं प्रादक्षिण्येनायुधस्थिति
चिन्तालिखितं नाम पुस्तकम् इति ध्यात्वा मनसा पुष्पाञ्जलिं द
मातृकाः त्रितारीबालापूर्विकाः स्वाङ्गेषु न्यसेत् ।)

यथा—

ऐं ह्रीं श्रीं ऐं क्लीं सौः अं नमः शिरसि, ६ आँ नमः मुखवृत्ते
इं नमः दक्षनेत्रे, ६ ईं नमः वामनेत्रे, ६ उं नमः दक्षकर्णे, ६ ऊं न
वामकर्णे, ६ ऋं नमः दक्षनासापुटे, ६ ॠं नमः वामनासापुटे, लृं न
दक्षगण्डे, ॡं नमः वामगण्डे, एं नमः ऊर्ध्वोष्ठे, ऐं नमः अधरोष्ठे,
नमः ऊर्ध्वदन्तपंक्तौ, औं नमः अधोदन्तपंक्तौ, अं नमः शिर
मुखान्ततः जिह्वाग्रे, अः नमः मुखान्ते कण्ठे ।

कं नमः दक्षबाहुमूले, खं नमः तन्मध्यसन्धौ दक्षकूर्परे,
नमः तन्मणिबन्धे, घं नमः तदंगुलिमूले, ङं नमः तदगुल
चं नमः वामबाहुमूले, छं नमः तन्मध्यसन्धौ, जं नमः तन्म
बन्धे, झं नमः तदंगुलिमूले, ञँ नमः तदंगुल्यग्रे, टं नमः दक्षोरुम
ठं नमः तज्जानुनि, डं नमः तज्जङ्घापादसन्धौ तद्गुल्फे, ढं न
तदंगुलिमूले, णं नमः तदंगुल्यग्रे, तं नमः वामोरूमूले, थं न
तज्जानुनि, दं नमः तज्जङ्घापादसन्धौ तद्गुल्फे, धं नमः तदंगु
मूले, नं नमः तदंगुल्यग्रे, पं नमः दक्षपार्श्वे, फं नमः वामपार्श्वे, बं न
पृष्ठे, भं नमः नाभौ, मं नमः जठरे, यं नमः हृदि, रं नमः दक्षक
दक्षस्कन्धे ; लं नमः अपरगले, गलपृष्ठे ; ककुदि ; वं नमः वामक

वामस्कन्धे ; शं नमः हृदयादिदक्षकरांगुल्यन्तम्, षं नमः हृदयादिवाम करांगुल्यन्तम्, सं नमः हृदयादिदक्षपादांगुल्यन्तम्, हं नमः हृदयादि-वामपादांगुल्यन्तम्, लं नमः हृदयादिगुह्यान्तम्, (नित्याषोडशिकार्णवे कटचादिपादांगुल्यन्तम्) क्षं नमः हृदयादिमूर्धान्तम् (नित्याषोडशिकार्णवे कटचादिब्रह्मरन्ध्रान्तम्) ।

अत्र मातृकाणां बिन्दुमत्त्वं 'वाग्देवताष्टकन्यासस्थान् सबिन्दूनचः सर्वत्र वर्गाणां बिन्दुयोग' इति ज्ञापकात् सिद्धम् । इति मातृका-न्यासः । अयमेक एव सूत्रोक्तः ।

**अन्तर्मातृकान्यासः**

अस्यान्तर्मातृकान्यासस्य ब्रह्मा ऋषिः, मातृकासरस्वती देवता, गायत्री छन्दः, हलो बीजानि, स्वराः शक्तयः, क्षं कीलकम्, मातृकान्यासजपे विनियोगः ।

ध्यानम्—

**पञ्चाशल्लिपिभिर्विभज्य मुखदोर्हृत्पद्मवक्षस्थलां**
**भास्वन्मौलिनिबद्धचन्द्रशकलामापीनतुङ्गस्तनीम् ।**
**मुद्रामक्षगुणं सुधाढ्यकलशं विद्याञ्च हस्ताम्बुजै-**
**र्बिभ्राणां विशदप्रभां त्रिनयनां वाग्देवतामाश्रये ।।**

आदि क्षान्तं पठित्वा ओं अं आं. . . . . . . .अं अः इतिषोड-शपत्रके पद्मे कण्ठे न्यसेत् । अं कं खं. . . . .टं ठं इति द्वादशपत्रके पद्मे हृदि, आं डं ढं. . .पं फं इति दशपत्रके पद्मे नाभौ, अं बं भं मं यं रं लं षट्पत्रके लिङ्गे, वं शं षं सं चतुष्पत्रके पायौ, हं क्षं इति द्विपत्रके भ्रुवोर्मध्ये ।

**आधारे लिङ्गनाभौ हृदयसरसिजे तालमूले ललाटे**
**द्वे पत्रे षोडशारे द्विदशदशदले द्वादशार्धे चतुष्के ।**
**वासान्ते भालमध्ये डफकठसहिते कण्ठदेशे स्वराणां**
**हं भं तत्त्वार्थयुक्तं सकलदलगतं वर्णरूपं नमामि ।।**

**करशुद्धिन्यासः**

ऐं ह्रीं श्रीं अं मध्यमाभ्यां नमः, आं अनामिकाभ्यां नमः, सौः कनिष्ठिकाभ्यां नमः अं अङ्गुष्ठाभ्यां नमः, आं तर्जनीभ्यां नमः, सौः करतलकरपृष्ठाभ्यां नमः ।

**आत्मरक्षान्यासः**

ऐं ह्रीं श्रीं ऐं क्लीं सौः महात्रिपुरसुन्दरि आत्मानं रक्ष-र
इति हृदये अञ्जलिं दद्यात् ।

**चतुरासनन्यासः**

ऐं ह्रीं श्रीं ह्रीं क्लीं सौः देव्यात्मासनाय नमः इति स्वस्य मूलाधा
,, ,, ,, हैं ह् क्लीं ह् सौः श्रीचक्रासनाय नमः,
,, ,, ,, ह् सैं ह् स् क्लीं ह् स्सौः सर्वमन्त्रासनाय नमः,
,, ,, ,, ह्रीं क्लीं ब्लें साध्यसिद्धासनाय नमः
इति त्रिभिर्मन्त्रैः मुहुर्मुहुः पुष्पक्षेपेण चक्रमन्त्रदेवतासनानि श्रीच
न्यसेत् ।

**बालाषडङ्गन्यासः**

ऐं ह्रीं श्रीं ऐं हृदयाय नमः, क्लीं शिरसे स्वाहा, सौः शिखायै व
ऐं कवचाय हुम्, क्लीं नेत्रत्रयाय वौषट्, सौः अस्त्राय फट् ।

**वशिन्यादिन्यासः**

ऐं ह्रीं श्रीं अं आं . . . अंअः ब्लूं वशिनीवाग्देवतायै नमः शिरसि,
३ कं. . . .ङं क्ल्ह्रीं कामेश्वरीवाग्देवतायै नमः ललाटे,
३ चं. . . .ञँ न्ब्लीं मोदिनीवाग्देवतायै नमः भ्रूमध्ये,
३ टं. . . .णं प्लूं विमलावाग्देवतायै नमः कण्ठे,
३ तं. . . .नं ज्म्रीं अरुणावाग्देवतायै नमः हृदि,
३ पं. . . .मं ह् स्ल्व्यूं जयिनीवाग्देवतायै नमः नाभौ,
३ यं. . . .वं झ्म्र्यूं सर्वेश्वरीवाग्देवतायै नमः लिङ्गे,
३ शं. . . .क्षं क्ष्म्रीं कौलिनीवाग्देवतायै नमः मूलाधारे,
इति न्यसेत् ।

**मूलविद्यावर्णन्यासः**

अस्य च ऋष्यादिन्यास एके कृताकृत इति वदन्ति । कर
च तत्प्रकारो जपप्रकरणे द्रष्टव्यः ।

'ऐं ह्रीं श्रीं कं नमः शिरसि, एं नमः मूलाधारे, ईं नमः हृदि, लं नमः दक्षनेत्रे, ह्रीं नमः वामनेत्रे, हं नमः भ्रूमध्ये, सं नमः दक्षश्रोत्रे, कं नमः वामश्रोत्रे, हं नमः मुखे, लं नमः दक्षभुजे, ह्रीं नमः वामभुजे, सं नमः पृष्ठे, कं नमः दक्षजानुनि, लं नमः वामजानुनि, ह्रीं नमः नाभौ इति कादिपञ्चदशीवर्णन्यासः। एवमेव हादिपञ्चदश्यपि।

**श्रीषोडशाक्षरोन्यासः**

ऐं ह्रीं श्रीं मूलविद्यायै नम इति दक्षमध्यमानामाभ्यां शिरसि न्यसेत्। अथ तत्र तां दीपाभां स्रवत्सुधारसां महासौभाग्यदां ध्यात्वा, पुनस्तथैव तामुच्चार्य महासौभाग्यं मे देहि, परसौभाग्यं दण्डयामीति सौभाग्यदण्डिन्या मुद्रया वामकर्णांसवेष्टनपूर्वकमामस्तकचरणम आ च वामाङ्गं न्यसेत्। पुनस्तथैव तामुच्चार्य मम शत्रून् निगृह णामीति रिपुजिह्वाग्रया मुद्रया वामपादाधो न्यसेत्। पुनः स्तथैव तामुच्चार्य त्रैलोक्यस्याहं कर्तेति त्रिखण्डां फाले न्यसेत्। पुनस्तथैव तामुच्चार्य वदने वेष्टनत्वेन न्यसेत्। पुनस्तथैव तामु-च्चार्य दक्षकर्णादिवामकर्णान्तं मुखवेष्टनत्वेन न्यसेत्। पुनस्तथैव तामुच्चार्य गलोर्ध्वमाशिरो न्यसेत्। पुनःस्तथैव तामाद्यन्तप्रणव-मुच्चार्य मस्तकात्पादपर्यन्तं पादादामस्तकञ्च न्यसेत्। पुनस्तथैव तामुच्चार्य योनिमुद्रया मुखे न्यस्य, पुनस्तामुच्चार्य योनिमुद्रया ललाटे न्यसेत्।

**संमोहनन्यासः**

ततः श्रीविद्यां स्मृत्वा तत्प्रभया जगदरुणं विभावयन् अनामिका-मूर्ध्वं परिभ्राम्य, उच्चार्य मुहुर्मुहुर्मूलविद्यां, ब्रह्मरन्ध्रे मणिबन्धद्वितये फाले च विन्यसेत्। एष संमोहनो नाम न्यासोऽन्वर्थः।

**संहारन्यासः**

अथ चतुस्तारीनमस्सम्पुटितान् मूलविद्याषोडशार्णान् क्रमेण पादयोः जंघयोः जान्वोः कटिभागद्वये पृष्ठे लिङ्गे नाभौ पार्श्वयोः स्तनयोरंसयोः कर्णयोः मूर्ध्नि मुखे नेत्रयोः कर्णयुगलसन्निधौ कर्णवेष्ट-

नयोश्च न्यसेत् । अत्र कूटत्रयस्य वर्णत्रयत्वेन षोडशार्णत्वव्यपदेशः
पादादिषु प्रथमं दक्षः ततो वाम इति बोध्यम् । यथा—

ओं ऐं ह्रीं श्रीं श्रीं नमः पादयोः, ह्रीं नमः जङ्घयोः, क्लीं नम
जान्वोः, ऐं नमः कटिभागद्वये, सौः नमः पृष्ठे, ओं नमः लिङ्गे, ह्रीं नम
नाभौ, श्रीं नमः पार्श्वयोः,क ए ई ल ह्रीं नमः स्तनयोः, हसकहलह
नमः अंसयोः, सकलह्रीं नमः कर्णयोः, सौः नमः मूर्ध्नि, ऐं नमः मु
क्लीं नमः नेत्रयोः, ह्रीं नमः कर्णयुगसन्निधौ, श्रीं नमः कर्णवेष्टनयोः ।

**सृष्टिन्यासः**

पुनस्तथैव मूलविद्यार्णान् क्रमेण ब्रह्मरन्ध्रे फाले दृशोः कर्णयो
घ्राणपुटयोः गण्डयोः दन्तपंक्त्योः ऊर्ध्वाधरोष्ठयोः जिह्वायां चो
कूपे पृष्ठे सर्वाङ्गे हृदि स्तनयोरुदरे लिङ्गे च न्यस्य मूलेन व्याप
कुर्यात् । यथा—

ओं ऐं ह्रीं श्रीं श्रीं नमः ब्रह्मरंध्रे,ह्रीं नमः फाले, क्लीं नमः नेत्रयो
ऐं नमः कर्णयोः, सौः नमः नासापुटयोः, ओं नमः गण्डयोः, ह्रीं नम
दन्तपंक्तौ, श्रीं नमः ओष्ठयोः, क ए ई ल ह्रीं नमः जिह्वायाम्, ह स
ह ल ह्रीं नमः कण्ठे, सकलह्रीं नमः पृष्ठे, सौः नमः सर्वांगे, ऐं नम
हृदि, क्लीं नमः स्तनयोः, ह्रीं नमः उदरे, श्रीं नमः लिङ्गे ।

## स्थितिन्यासः

अथ पूर्वक्रमेणैवांगुष्ठादिकनिष्ठिकान्तकराङ्गुलिषु मूर्ध्नि मु
हृदि आनाभेः पादद्वयावधि, कण्ठादानाभि मूर्ध्न आकण्ठं पूर्ववत्पा
दांगुलिषु च न्यसेत् । अत्र दक्षवामकरचरणांगुलिषु द्वयोर्द्वयोरेकैक
मक्षरम् । तथाहि—

ओं ऐं ह्रीं श्रीं श्रीं नमः अंगुष्ठयोः, ह्रीं नमः तर्जन्योः, क्लीं नम
मध्यमयोः, ऐं नमः अनामिकयोः, सौः नमः कनिष्ठिकयोः, ओं नम
मूर्ध्नि,ह्रीं नमः मुखे,श्रीं नमः हृदि,क ए ई ल ह्रीं नमः नाभौ,ह स क ह
ह्रीं नमः कण्ठादिनाभ्यन्तम्, सकलह्रीं नमः मूर्धादिकण्ठान्तम्, सौ
नमः पादांगुष्ठयोः, ऐं नमः पादतर्जन्योः, क्लीं नमः पादमध्यमयो
ह्रीं नमः पादानामिकयोः, श्रीं नमः पादकनिष्ठिकयोः ।

एते पञ्चैव ज्ञानार्णवमते । तन्त्रान्तरेषु तु अन्येऽपि पञ्चोपलभ्यन्ते ।

## लघुषोढन्यासः

अस्य श्री लघुषोढान्यासस्य दक्षिणामूर्तये ऋषये नमः, (शिरसि) गायत्र्यै छन्दसे नमः, (मुखे) गणेशग्रहनक्षत्रयोगिनीराशिपीठरूपिण्यै श्रीमहात्रिपुरसुन्दर्यै देवतायै नमः (हृदये) श्रीविद्याङ्गत्वेन न्यासे विनियोगाय नमः (करसम्पुटे)

ऐं ह्रीं श्रीं अं कं खं गं घं ङं आं ऐं अङ्गुष्ठाभ्यां नमः
,, ,, ,, ईं चं छं जं झं ञँ ईं क्लीं तर्जनीभ्यां नमः
,, ,, ,, उं टं ठं डं ढं णं ऊं सौः मध्यमाभ्यां नमः
,, ,, ,, एं तं थं दं धं नं ऐं ऐं अनामिकाभ्यां नमः
,, ,, ,, ओं पं फं बं भं मं औं क्लीं कनिष्ठिकाभ्यां नमः
,, ,, ,, अं यं रं लं वं शं षं सं हं लं क्षं अः सौः करतलकरपृष्ठाभ्यां नमः ।

एवमेव हृदयादिन्यासः । ध्यानम्—

**उद्यत्सूर्यसहस्राभां पीनोन्नतपयोधराम् ।**
**रक्तमाल्याम्बरालेपां रक्तभूषणभूषिताम् ॥**
**पाशांकुशधनुर्बाणभास्वत्पाणिचतुष्टयाम् ।**
**लसन्नेत्रत्रयां स्वर्णमुकुटोद्भासिमस्तकाम् ॥**
**गणेशग्रहनक्षत्रयोगिनीराशिरूपिणीम् ।**
**देवीं पीठमयीं ध्यायेन्मातृकां सुन्दरीं पराम् ॥**

आयुधक्रमस्तु सपर्याप्रकरण एवोक्त इहानुसन्धेयः । इति श्रीदेवीं समष्टिरूपेण ध्यात्वा गणेशादिव्यष्टिरूपेण च ध्यायेत् ।

## गणेशन्यासः

**तरुणादित्यसङ्काशान् गजवक्त्रांस्त्रिलोचनान् ।**
**पाशांकुशवराभीतिकरान् शक्तिसमन्वितान् ॥**
**ते तु सिन्दूरवर्णाभाः सर्वालंकारभूषिताः ।**
**एकहस्तधृताम्भोजा इतरालिङ्गितप्रियाः ॥**

वामोर्ध्वकरमारभ्य वामाधःकरपर्यन्तं गणेशानां पाशादिध्यानम्। शक्तीनान्तु वामकरे कमलं दक्षिणे च प्रियाश्लेष इति ध्यात्वा, मातृकास्थानेषु त्रितारीमातृकापूर्वकं गणेशान् न्यसेत्। यथा—

ऐं ह्रीं श्रीं अं श्रीयुक्ताय विघ्नेशाय नमः शिरसि,
,, ,, ,, आं ह्रींयुक्ताय विघ्नराजाय नमः मुखवृत्ते,
,, ,, ,, इं तुष्टियुक्ताय विनायकाय नमः दक्षनेत्रे,
,, ,, ,, ईं शान्तियुक्ताय शिवोत्तमाय नमः वामनेत्रे,
,, ,, ,, उं पुष्टियुक्ताय विघ्नहृते नमः दक्षकर्णे,
,, ,, ,, ऊं सरस्वतीयुक्ताय विघ्नकर्त्रे नमः वामकर्णे,
,, ,, ,, ऋं रतियुक्ताय विघ्नराजे नमः दक्षनासापुटे,
,, ,, ,, ॠं मेधायुक्ताय गणनायकाय नमः वामानासापुटे,
,, ,, ,, लृं कान्तियुक्ताय एकदन्ताय नमः दक्षगण्डे,
,, ,, ,, ॡं कामिनीयुक्ताय द्विदन्ताय नमः वामगण्डे,
,, ,, ,, एं मोहिनीयुक्ताय गजवक्त्राय नमः ऊर्ध्वोष्ठे,
,, ,, ,, ऐं जटायुक्ताय निरञ्जनाय नमः अधरोष्ठे,
,, ,, ,, ओं तीव्रायुक्ताय कपर्दभृते नमः ऊर्ध्वदन्तपंक्तौ,
,, ,, ,, औं ज्वालिनीयुक्ताय दीर्घमुखाय नमः अधोदन्तपंक्तौ
,, ,, ,, अं नन्दायुक्ताय शंकुकर्णाय नमः जिह्वाग्रे,
,, ,, ,, अः सुरसायुक्ताय वृषध्वजाय नमः कण्ठे,
,, ,, ,, कं कामरूपिणीयुक्ताय गणनाथाय नमः दक्षबाहुमूले,
,, ,, ,, खं सुभ्रूयुक्ताय गजेन्द्राय नमः दक्षकूर्परे,
,, ,, ,, गं जयिनीयुक्ताय शूर्पकर्णाय नमः दक्षमणिबन्धे,
,, ,, ,, घं सत्यायुक्ताय त्रिलोचनाय नमः दक्षकरांगुलिमूले,
,, ,, ,, ङं विघ्नेशीयुक्ताय लम्बोदराय नमः दक्षकरांगुल्यग्रे,
,, ,, ,, चं सुरूपायुक्ताय महानादाय नमः वामबाहुमूले,
,, ,, ,, छं कामदायुक्ताय चतुर्मूर्तये नमः वामकूर्परे,
,, ,, ,, जं मदविह्वलायुक्ताय सदाशिवाय नमः वाममणिबन्धे
,, ,, ,, झं विकटायुक्ताय आमोदाय नमः वामकरांगुलिमूले,
,, ,, ,, ञँ पूर्णायुक्ताय दुर्मुखाय नमः वामकरांगुल्यग्रे,

ऐं ह्रीं श्रीं टं भूतिदायुक्ताय सुमुखाय नमः दक्षोरुमूले,
,, ,, ,, ठं भूमियुक्ताय प्रमोदाय नमः दक्षजानुनि,
,, ,, ,, डं शक्तियुक्ताय एकपादाय नमः दक्षगुल्फे,
,, ,, ,, ढं रमायुक्ताय द्विजिह्वाय नमः दक्षपादांगुलिमूले,
,, ,, ,, णं मानुषीयुक्ताय शूराय नमः दक्षपादांगुल्यग्रे,
,, ,, ,, तं मकरध्वजायुक्ताय वीराय नमः वामोरुमूले,
,, ,, ,, थं वीरिणीयुक्ताय षण्मुखाय नमः वामजानुनि,
,, ,, ,, दं भ्रुकुटीयुक्ताय वरदाय नमः वामगुल्फे,
,, ,, ,, धं लज्जायुक्ताय वामदेवाय नमः वामपादांगुलिमूले,
,, ,, ,, नं दीर्घघोणायुक्ताय वक्रतुण्डाय नमः वामपादांगुल्यग्रे,
,, ,, ,, पं धनुर्धरायुक्ताय द्विरण्डकाय नमः दक्षपार्श्वे,
(नित्यषोडशिकार्णवे द्वितुण्डाय नमः)
,, ,, ,, फं यामिनीयुक्ताय सेनान्ये नमः वामपार्श्वे,
,, ,, ,, बं रात्रियुक्ताय ग्रामण्ये नमः पृष्ठे,
,, ,, ,, भं चन्द्रिकायुक्ताय मत्ताय नमः नाभौ,
,, ,, ,, मं शशिप्रभायुक्ताय विमत्ताय नमः जठरे,
,, ,, ,, यं लोलायुक्ताय मत्तवाहनाय नमः हृदये
,, ,, ,, रं चपलायुक्ताय जटिने नमः दक्षस्कन्धे,
,, ,, ,, लं ऋद्धियुक्ताय मुण्डिने नमः गलपृष्ठे (ककुदि),
,, ,, ,, वं दुर्भगायुक्ताय खड्गिने नमः वामस्कन्धे,
,, ,, ,, शं सुभगायुक्ताय वरेण्याय नमः हृदयादिदक्षकरांगुल्यन्तम्,
,, ,, ,, षं शिवायुक्ताय वृषकेतनाय नमः हृदयादिवामकरांगुल्यन्तम्,
,, ,, ,, सं दुर्गायुक्ताय भक्ष्यप्रियाय नमः हृदयादिदक्षपादांगुल्यन्तम्,
,, ,, ,, हं कालीयुक्ताय गणेशाय नमः हृदयादिवामपादाङ्गुल्यन्तम्,
,, ,, ,, ळं कालकुब्जिकायुक्ताय मेघनादाय नमः हृदयादिगुह्यान्तम्,
,, ,, ,, क्षं विघ्नहारिणीयुक्ताय गणेश्वराय नमः हृदयादिमूर्धान्तम् ।

**ग्रहन्यासः**

**रक्तं श्वेतं तथा रक्तं श्यामं पीतञ्च पाण्डुरम् ।**
**कृष्णं धूम्रं धूम्रधूम्रं भावयेद्रविपूर्वकान् ।।**

**कामरूपधरान्देवान् दिव्याभरणभूषितान् ।**
**वामोरुन्यस्तहस्तांश्च दक्षहस्तवरप्रदान् ॥**
**शक्तयोऽपि तथा ध्येया वराभयकराम्बुजाः ।**
**स्वस्वप्रियांकनिलयाः सर्वाभरणभूषिताः ॥**

इति ध्यात्वा,

ऐं ह्रीं श्रीं अं आं इं ईं उं ऊं ऋं ॠं लृं ॡं एं ऐं ओं औं अं अः रेणुकायुक्ताय सूर्याय नमः हृदयाधः हृज्जठरसन्धौ ।
ऐं ह्रीं श्रीं यं रं लं वं अमृतायुक्ताय चन्द्राय नमः भ्रूमध्ये,
,, ,, ,, कं खं गं घं ङं धर्मायुक्ताय भौमाय नमः नेत्रयोः,
,, ,, ,, चं छं जं झं ञं यशस्विनीयुक्ताय बुधाय नमः श्रोत्रकूपाधः,
,, ,, ,, टं ठं डं ढं णं शांकरीयुक्ताय बृहस्पतये नमः कण्ठे,
,, ,, ,, तं थं दं धं नं ज्ञानरूपायुक्ताय शुक्राय नमः हृदि,
,, ,, ,, पं फं बं भं मं शक्तियुक्ताय शनैश्चराय नमः नाभौ,
,, ,, ,, शं षं सं हं कृष्णायुक्ताय राहवे नमः मुखे,
,, ,, ,, लं क्षं धूम्रायुक्ताय केतवे नमः गुदे ॥

**नक्षत्रन्यासः**

**ज्वलत्कालानलप्रख्या वरदाभयपाणयः ।**
**नतिपाण्योऽश्विनीपूर्वाः सर्वाभरणभूषिताः ॥**

इति ध्यात्वा,
ऐं ह्रीं श्रीं अं आं अश्विन्यै नमः ललाटे,
,, ,, ,, इं भरण्यै नमः दक्षनेत्रे,
,, ,, ,, ईं उं ऊं कृत्तिकायै नमः वामनेत्रे,
,, ,, ,, ऋं ॠं लृं ॡं रोहिण्यै नमः दक्षकर्णे,
,, ,, ,, एं मृगशिरसे नमः वामकर्णे,
,, ,, ,, ऐं आर्द्रायै नमः दक्षनासापुटे,
,, ,, ,, ओं औं पुनर्वसवे नमः वामनासापुटे,
,, ,, ,, कं पुष्याय नमः कण्ठे,
,, ,, ,, खं गं आश्लेषायै नमः दक्षस्कन्धे,

ऐं ह्रीं श्रीं घं ङं मघायै नमः वामस्कन्धे,
,, ,, ,, चं पूर्वफल्गुन्यै नमः पृष्ठे,
,, ,, ,, छं जं उत्तरफल्गुन्यै नमः दक्षकूर्परे,
,, ,, ,, झं ञाँ हस्तायै नमः वामकूर्परे,
,, ,, ,, ठं ठं चित्रायै नमः दक्षमणिबन्धे,
,, ,, ,, डं स्वात्यै नमः वाममणिबन्धे,
,, ,, ,, ढं णं विशाखायै नमः दक्षहस्ते,
,, ,, ,, तं थं दं अनूराधायै नमः वामहस्ते,
,, ,, ,, धं ज्येष्ठायै नमः नाभौ,
,, ,, ,, नं पं फं मूलाय नमः कटिबन्धे,
,, ,, ,, बं पूर्वाषाढायै नमः दक्षोरौ,
,, ,, ,, भं उत्तराषाढायै नमः वामोरौ,
,, ,, ,, मं श्रवणाय नमः दक्षजानुनि,
,, ,, ,, यं रं धनिष्ठायै नमः वामजानुनि,
,, ,, ,, लं शततारकायै नमः दक्षजंघायाम्,
,, ,, ,, वं शं पूर्वभाद्रपदायै नमः वामजंघायाम्,
,, ,, ,, षं सं हं उत्तरभाद्रपदायै नमः दक्षपादे,
,, ,, ,, लं क्षं अं अः रेवत्यै नमः वामपादे ।

**योगिनीन्यासः**

ध्यानम्—

**कण्ठस्थाने विशुद्धौ नृपदलकमले श्वेतवर्णां त्रिणेत्रां**
**हस्तैः खट्वाङ्गखड्गौ त्रिशिखमपि महाचर्म सन्धारयन्तीम् ।**
**वक्त्रेणैकेन युक्तां पशुजनभयदां पायसान्नैकसक्तां**
**त्वक्स्थां वन्देऽमृताद्यैः परिवृतवपुषं डाकिनीं वीरवन्द्याम् ।।**

इति ध्यात्वा,

'ऐं ह्रीं श्रीं डां डीं ड म ल व र यूं डाकिन्यै नमः। ऐं ह्रीं श्रीं अं आं इं ईं उं ऊं ऋं ॠं लृं ॡं एं ऐं ओं औं अं अः मां रक्ष-रक्ष त्वगात्मनं नमः' इति मन्त्रेण कण्ठस्थषोडशदलविशुद्धिकमलकर्णिकायां डाकिनीं

न्यस्य तद्दलेषु पुरोभागादि प्रादक्षिण्येन तदावरणशक्तीः न्यसेत् यथा—

ऐं ह्रीं श्रीं अं अमृतायै नमः, आं आकर्षिण्यै नमः, इं इन्द्राण्यै नम ईं ईशान्यै नमः, उं उमायै नमः, ऊं ऊर्ध्वकेश्यै नमः, ऋं ऋद्धिदायै नम ॠं ॠकारायै नमः, लृं लृकारायै नमः, ॡं ॡकारायै नमः, एं एकपदा नमः, ऐं ऐश्वर्यात्मिकायै नमः, ओं ओंकारायै नमः, औं औषध्यै नम अं अम्बिकायै नमः, अः अक्षरायै नम इति।

ततो ध्यानम्—

**हृत्पद्मे भानुपत्रद्विवदनलसितां दंष्ट्रिणीं श्यामवर्णाम्**
**अक्षं शूलं कपालं डमरुमपि भुजैर्धारयन्तीं त्रिणेत्राम्।**
**रक्तस्थां कालरात्रिप्रभृतिपरिवृतां स्निग्धभक्तैकसक्तां**
**श्रीमद्वीरेन्द्रवन्द्यामभिमतफलदां राकिणीं भावयामः।**

इति ध्यात्वा,

'ऐं ह्रीं श्रीं रां रीं र म ल व र यूं राकिण्यै नमः, ऐं ह्रीं श्रीं कं खं घं ङं चं छं जं झं ञँ टं ठं मां रक्ष रक्ष असृगात्मानं नमः' इति हृद स्थितद्वादशदलानाहतनलिनकर्णिकायां राकिणीं न्यस्य तद्दलेषु प्राग्व तदावृत्तिशाक्तीर्न्यसेत्। यथा—

ऐं ह्रीं श्रीं कं कालरात्र्यै नमः, खं खण्डितायै नमः, गं गायत्र्यै नम घं घण्टाकार्षिण्यै नमः, ङं ङार्णायै नमः, चं चण्डायै नमः, छं छाया नमः, जं जयायै नमः, झं झंकारिण्यै नमः, ञँ ज्ञानरूपायै नमः, टं टं हस्तायै नमः, ठं ठंकारिण्यै नम इति। अथ—

**दिक्पत्रे नाभिपद्मे त्रिवदनलसितां दंष्ट्रिणीं रक्तवर्णां**
**शक्तिं दम्भोलिदण्डावभयमपि भुजैर्धारयन्तीं महोग्राम्।**
**डामर्याद्यैः परीतां पशुजनभयदां मांसधात्वेकनिष्ठां**
**गौडान्नासक्तचित्तां सकलसुखकरीं लाकिनीं भावयामः॥**

इति ध्यात्वा,

'ऐं ह्रीं श्रीं लां लीं ल म ल व र यूं लाकिन्यै नमः। ऐं ह्रीं श्रीं डं ढं णं तं तं थं दं धं नं पं फं मां रक्ष रक्ष मांसात्मानं नमः' इति नाभिग

दशदलमणिपूरकसरोजकर्णिकायां लाकिनीं न्यस्य तद्दलेषु पूर्ववत्तत्परिवारशक्तीर्न्यसेत् । यथा—

ऐं ह्रीं श्रीं डं डामर्यै नमः, ढं ढंकारिण्यै नमः, णं णार्णायै नमः, तं तामस्यै नमः, थं स्थाण्व्यै नमः, दं दाक्षायण्यै नमः, धं धात्र्यै नमः, नं नार्यै नमः, पं पार्वत्यै नमः, फं फट्कारिण्यै नमः । तदनु—

**स्वाधिष्ठानाख्यपद्मे रसदललसिते वेदवक्त्रां त्रिणेत्रां**
**हस्ताब्जैर्धारयन्तीं त्रिशिखगुणकपालांकुशानात्तगर्वाम् ।**
**मेदोधातुप्रतिष्ठामलिमदमुदितां बन्धिनीमुख्ययुक्तां**
**पीतां दध्योदनेष्टामभिमतफलदां काकिनीं भावयामः ॥**

इति ध्यात्वा,

'ऐं ह्रीं श्रीं कां कीं क म ल व र यूं काकिन्यै नमः, ऐं ह्रीं श्रीं बं भं मं यं रं लं मां रक्ष रक्ष मेदधात्मानं नमः' इति गुह्यस्थानगतषड्दलस्वाधिष्ठानसरसिजकर्णिकायां काकिनीं न्यस्य तद्दलेषु तदावरणशक्तीः प्राग्वन्न्यसेत् । यथा—

ऐं ह्रीं श्रीं बं बन्धिन्यै नमः, भं भद्रकाल्यै नमः, मं महामायायै नमः, यं यशस्विन्यै नमः, रं रक्तायै नमः, लं लम्बोष्ठ्यै नमः । ततः—

**मूलाधारस्य पत्रे श्रुतिदललसिते पञ्चवक्त्रां त्रिणेत्रां**
**धूम्राभामस्थिसंस्थां सृणिमपि कमलं पुस्तकं ज्ञानमुद्राम् ।**
**बिभ्राणां बाहुदण्डैः सुललितवरदापूर्वशक्त्यावृतां तां**
**मुद्गान्नासक्तचित्तां मधुमदमुदितां साकिनीं भावयामः ॥**

इति ध्यात्वा,

'ऐं ह्रीं श्रीं सां सीं स म ल व र यूं साकिन्यै नमः । ऐं ह्रीं श्रीं वं शं षं सं मां रक्ष रक्ष अस्थ्यात्मानं नमः' इति पायूपस्थमध्यगतचतुर्दलमूलाधारकमलकर्णिकायां साकिनीं न्यस्य तद्दलेषु पूर्ववत्तदावृत्तिशक्तीर्न्यसेत् । यथा—

ऐं ह्रीं श्रीं वं वरदायै नमः, शं श्रियै नमः, षं षण्डायै नमः, सं सरस्वत्यै नमः । अथ—

**भ्रूमध्ये बिन्दुपद्मे दलयुगकलिते शुक्लवर्णां कराब्जै-**
**र्बिभ्राणां ज्ञानमुद्रां डमरुकममलामक्षमालां कपालम् ।**

**षड्वक्त्रां मज्जसंस्थां त्रिणयनलसितां हंसवत्यादियुक्तां**
**हारिद्रान्नैकसक्तां सकलसुखकरीं हाकिनीं भावयामः ।।**

इति ध्यात्वा—

'ऐं ह्लीं श्रीं हां हीं ह म ल व ल यूं हाकिन्यै नमः ऐं ह्लीं श्रीं हं क्षं मां रक्ष-रक्ष मज्जात्मानं नमः' इति भ्रूमध्यगतद्विदलाज्ञाकमलकर्णिकायां हाकिनीं न्यस्य तद्दक्षवामदलयोः क्रमेण—

ऐं ह्लीं श्रीं हं हंसवत्यै नमः, क्षं क्षमावत्यै नम इति तच्छक्तिद्वयं न्यसेत् । तदनु—

**मुण्डव्योमस्थपद्मे दशशतदलके कर्णिकाचन्द्रसंस्थां**
**रेतोनिष्ठां समस्तायुधकलितकरां सर्वतो वक्त्रपद्माम् ।**
**आदिक्षान्तार्णशक्तिप्रकरपरिवृतां सर्ववर्णां भवानीं**
**सर्वान्नासक्तचित्तां परशिवरसिकां याकिनीं भावयामः ।।**

इति ध्यात्वा,

'ऐं ह्लीं श्रीं यां यीं य म ल व र यूं याकिन्यै नमः । ऐं ह्लीं श्रीं अं आं ·····क्षं (५१) मां रक्ष-रक्ष शुक्रात्मानं नमः' इति ब्रह्मरन्ध्रगतसहस्रदलसरसिजकर्णिकायां याकिनीं न्यस्य तद्दलेषु प्रति विंशतिदलं तदावरणशक्तीः अमृताद्याः क्षमावत्यन्ताः पूर्वोक्ताः प्राग्वत् न्यसेत् ।

**राशिन्यासः**

**रक्तश्वेतहरित्पाण्डुचित्रकृष्णपिशङ्गकान् ।**
**कपिशबभ्रुकिर्मीरकृष्णधूम्रान् क्रमात्स्मरेत् ।।**

राशीनिति शेषः । इति ध्यात्वा,

ऐं ह्लीं श्रीं अं आं इं ईं मेषाय नमः दक्षिणपादे,
,, ,, ,, उं ऊं वृषाय नमः लिङ्गदक्षभागे,
,, ,, ,, ऋं ॠं लृं ॡं मिथुनाय नमः दक्षकुक्षौ,
,, ,, ,, एं ऐं कर्काय नमः हृदयदक्षभागे,
,, ,, ,, ओं औं सिंहाय नमः दक्षबाहुमूले,
,, ,, ,, अं अः शं षं सं हं लं कन्यायै नमः दक्षशिरोभागे,
,, ,, ,, कं खं गं घं ङं तुलायै नमः वामशिरोभागे,

ऐं ह्लीं श्रीं चं छं जं झं ञँ वृश्चिकाय नमः वामबाहुमूले,
,, ,, ,, टं ठं डं ढं णं धनुषे नमः हृदयवामभागे,
,, ,, ,, तं थं दं धं नं मकराय नमः वामकुक्षौ,
,, ,, ,, पं फं बं भं मं कुम्भाय नमः लिङ्गवामभागे,
,, ,, ,, यं रं लं वं क्षं मीनाय नमः वामपादे ।

**पीठन्यासः**

**सितासितारुणश्यामहरित्पीतान्यनुक्रमात् ।**
**पुनःक्रमेण देवेशि पञ्चाशत्पीठसञ्चयः ।।**

इति भावयित्वा मातृकाभिस्समं पूर्वोक्तेषु तासां स्थानेषु पीठानि क्रमेण विन्यसेत् । यथा—

ऐं ह्लीं श्रीं अं कामरूपाय नमः शिरसि,
,, ,, ,, आं वाराणस्यै नमः मुखवृत्ते,
,, ,, ,, इं नेपालाय नमः दक्षनेत्रे,
,, ,, ,, ईं पौण्ड्रवर्धनाय नमः वामनेत्रे,
,, ,, ,, उं पुरस्थितकाश्मीराय नमः दक्षकर्णे,
,, ,, ,, ऊं कान्यकुब्जाय नमः वामकर्णे,
,, ,, ,, ऋं पूर्णशैल्याय नमः दक्षनासापुटे,
,, ,, ,, ॠं अर्बुदाचलाय नमः वामनासापुटे,
,, ,, ,, ऌं आम्रातकेश्वराय नमः दक्षगण्डे,
,, ,, ,, ॡं एकाम्राय नमः वामगण्डे,
,, ,, ,, एं त्रिस्रोतसे नमः ऊर्ध्वोष्ठे,
,, ,, ,, ऐं कामकोटये नमः अधरोष्ठे,
,, ,, ,, ओं कैलासाय नमः ऊर्ध्वदन्तपंक्तौ,
,, ,, ,, औं भृगुनगराय नमः अधोदन्तपंक्तौ,
,, ,, ,, अं केदाराय नमः जिह्वाग्रे,
,, ,, ,, अः चन्द्रपुष्करिण्यै नमः कण्ठे,
,, ,, ,, कं श्रीपुराय नमः दक्षबाहुमूले,
,, ,, ,, खं ओंकाराय नमः दक्षकूर्परे,
,, ,, ,, गं जालन्धराय नमः दक्षमणिबन्धे,

ऐं ह्लीं श्रीं घं मालवाय नमः दक्षकरांगुलिमूले,
,, ,, ,, ङं कुलान्तकाय नमः दक्षकरांगुल्यग्रे,
,, ,, ,, चं देवीकोटाय नमः वामबाहुमूले,
,, ,, ,, छं गोकर्णाय नमः वामकूर्परे,
,, ,, ,, जं मारुतेश्वराय नमः वाममणिबन्धे,
,, ,, ,, झं अट्टहासाय नमः वामकरांगुलिमूले,
,, ,, ,, ञँ वैराजायै नमः वामकरांगुल्यग्रे,
,, ,, ,, टं राजगेहाय नमः दक्षोरूमूले,
,, ,, ,, ठं महापथाय नमः दक्षजानुनि,
,, ,, ,, डं कोलापुराय नमः दक्षगुल्फे,
,, ,, ,, ढं एलापुराय नमः दक्षपादांगुलिमूले,
,, ,, ,, णं कालेश्वराय नमः दक्षपादांगुल्यग्रे,
,, ,, ,, तं जयन्तिकायै नमः वामोरुमूले,
,, ,, ,, थं उज्जयिन्यै नमः वामजानुनि,
,, ,, ,, दं चित्रायै नमः वामगुल्फे,
,, ,, ,, धं क्षीरिकायै नमः वामपादांगुलिमूले,
,, ,, ,, नं हस्तिनापुराय नमः वामपादांगुल्यग्रे,
,, ,, ,, पं उड्डीशाय नमः दक्षपार्श्वे,
,, ,, ,, फं प्रयागाय नमः वामपार्श्वे,
,, ,, ,, बं षष्ठीशाय नमः पृष्ठे,
,, ,, ,, भं मायापुर्यै नमः नाभौ,
,, ,, ,, मं जलेशाय नमः जठरे,
,, ,, ,, यं मलयाय नमः हृदये,
,, ,, ,, रं श्रीशैलाय नमः दक्षस्कन्धे,
,, ,, ,, लं मेरवे नमः गलपृष्ठे,
,, ,, ,, वं गिरिवराय नमः वामस्कन्धे,
,, ,, ,, शं महेन्द्राय नमः हृदयादिदक्षकरांकुल्यन्तम्
,, ,, ,, षं वामनाय नमः हृदयादिवामकरांगुल्यन्तम्,
,, ,, ,, सं हिरण्यपुराय नमः हृदयादिदक्षपादांगुल्यन्तम्,

ऐं ह्रीं श्रीं हं महलक्ष्मीपुराय नमः हृदयादिवामपादांगुल्यन्तम्,
,, ,, ,, लं ओड्याणाय नमः हृदयादिगुह्यान्तम्,
,, ,, ,, क्षं छायाच्छत्राय नमः हृदयादिमूर्धन्तिम्।

(इति षडवयवकः षोढान्यासस्समाप्तः)

## श्रीचक्रन्यासः

अस्य श्री श्रीचक्रन्यासस्येत्यनन्तरं जपप्रकरणे वक्ष्यमाणान् ऋष्यादीन्न्यस्याह्निकप्रकरणोक्तवद् ध्यात्वा श्रीदेव्या उपचारमन्त्रेण पुष्पाञ्जलिं दत्वा,

**शरीरं चिन्तयेदादौ निजं श्रीचक्ररूपकम्।**
**त्वगाद्याकारनिर्मुक्तं ज्वलत्कालाग्निसन्निभम्॥**

इति ध्यात्वा—

ऐं ह्रीं श्रीं समस्तप्रकटगुप्तगुप्ततरसम्प्रदायकुलकौलनिगर्भरहस्यातिरहस्यपरापररहस्ययोगिनीचक्रदेवताभ्यो नम इति सर्वाङ्गे व्यापकं न्यस्य,

ऐं ह्रीं श्रीं गं गणपतये नमः दक्षोरौ,
,, ,, ,, क्षं क्षेत्रपालाय नमः दक्षांसे,
,, ,, ,, यां योगिनीभ्यो नमः वामांसे,
,, ,, ,, वं बटुकाय नमः वामोरौ,
,, ,, ,, लं इन्द्राय नमः पादांगुष्ठद्वयाग्रे,
,, ,, ,, रं अग्नये नमः दक्षजानुनि,
,, ,, ,, टं यमाय नमः दक्षपार्श्वे,
,, ,, ,, क्षं निर्ऋतये नमः दक्षांसे,
,, ,, ,, वं वरुणाय नमः मूर्ध्नि,
,, ,, ,, यं वायवे नमः वामांसे,
,, ,, ,, सं सोमाय नमः वामपार्श्वे,
,, ,, ,, हं ईशानाय नमः वामजानुनि,
,, ,, ,, हंसः ब्रह्मणे नमः मूर्ध्नि,
,, ,, ,, अं अनन्ताय नमः मूलाधारे।

**त्रैलोक्यमोहनचक्रन्यासः**

ऐं ह्रीं श्रीं अं आं सौः त्रैलोक्यमोहनचक्राय नम इति व्यापकं न्यस्य ततः ऐं ह्रीं श्रीं आद्यचतुरस्ररेखायै नम इति दक्षांसपृष्ठादिवक्ष्यमाणेषु स्थानेष्वञ्जलिना व्यापकं न्यस्य,

ऐं ह्री श्रीं अणिमासिध्यै नमः दक्षांसपृष्ठे,
,, ,, ,, लघिमासिध्यै नमः दक्षपाण्यंगुल्यग्रेषु,
,, ,, ,, महिमासिध्यै नमः दक्षोरुसन्धौ,
,, ,, ,, ईशित्वसिध्यै नमः दक्षपादांगुल्यग्रेषु,
,, ,, ,, वशित्वसिध्यै नमः वामपादांगुल्यग्रेषु,
,, ,, ,, प्राकाम्यसिध्यै नमः वामोरुसन्धौ,
,, ,, ,, भुक्तिसिध्यै नमः वामपाण्यंगुल्यग्रेषु,
,, ,, ,, इच्छासिध्यै नमः वामांसपृष्ठे,
,, ,, ,, प्राप्तिसिध्यै नमः शिखामूले,
,, ,, ,, सर्वकामसिध्यै नमः शिरःपृष्ठे ।

ऐं ह्रीं श्रीं चतुरस्रमध्यरेखायै नम इति वक्ष्यमाणाङ्गेषु व्यापकं न्यस्य,

ऐं ह्रीं श्रीं ब्राह्म्यै नमः पादांगुष्ठद्वये,
,, ,, ,, माहेश्वर्यै नमः दक्षपार्श्वे,
,, ,, ,, कौमार्यै नमः मूर्ध्नि,
,, ,, ,, वैष्णव्यै नमः वामपार्श्वे,
,, ,, ,, वाराह्यै नमः वामजानुनि,
,, ,, ,, इन्द्राण्यै नमः दक्षजानुनि,
,, ,, ,, चामुण्डायै नमः दक्षांसे,
,, ,, ,, महालक्ष्म्यै नमः वामांसे ।

ऐं ह्रीं श्रीं चतुरस्रान्त्यरेखायै नम इति वक्ष्यमाणाङ्गेषु व्यापकं न्यस्य,

ऐं ह्रीं श्रीं सर्वसंक्षोभिण्यै नमः पादांगुष्ठद्वये,
,, ,, ,, सर्वविद्राविण्यै नमः दक्षपार्श्वे,
,, ,, ,, सर्वाकर्षिण्यै नमः मूर्ध्नि,

ऐं ह्लीं श्रीं सर्ववशंकर्यै नमः वामपार्श्वे,
,, ,, ,, सर्वोन्मादिन्यै नमः वामजानुनि,
,, ,, ,, सर्वमहांकुशायै नमः दक्षजानुनि,
,, ,, ,, सर्वखेचर्यै नमः दक्षांसे,
,, ,, ,, सर्वबीजाय नमः वामांसे,
,, ,, ,, सर्वयोनये नमः द्वादशान्ते,
,, ,, ,, सर्वत्रिखण्डायै नमः पादांगुष्ठद्वये,

ऐं ह्लीं श्रीं अं आं सौः त्रैलोक्यमोहनचक्रेश्वर्यै त्रिपुरायै नमः हृदये ।

एताः प्रकटयोगिनिन्यः त्रैलोक्यमोहने चक्रे समुद्राः ससिद्धयस्सायुधाः सशक्तयः सवाहनाः सपरिवाराः सर्वा न्यस्तास्सन्त्विवति हृदि चक्रसमर्पणं न्यस्य,

**सर्वाशापरिपूरकचक्रन्यासः**

ऐं क्लीं सौः सर्वाशापरिपूरकचक्राय नम इति व्यापकं न्यास्य,
ऐं ह्लीं श्रीं कामाकर्षिण्यै नित्याकलायै नमः दक्षकर्णपृष्ठे,
,, ,, ,, बुध्याकर्षिण्यै नमः दक्षांसे,
,, ,, ,, अहंकाराकर्षिण्यै नमः दक्षकूर्परे,
,, ,, ,, शब्दाकर्षिण्यै नमः दक्षकरपृष्ठे,हस्ततलपृष्ठयोः,
,, ,, ,, स्पर्शाकर्षिण्यै नमः दक्षोरौ, दक्षस्फिजि,
,, ,, ,, रूपाकर्षिण्यै नमः दक्षजानुनि,
,, ,, ,, रसाकर्षिण्यै नमः दक्षगुल्फे,
,, ,, ,, गन्धाकर्षिण्यै नमः दक्षपादतले,दक्षप्रपदे,
,, ,, ,, चित्ताकर्षिण्यै नमः वामपादतले, वामप्रपदे,
,, ,, ,, धैर्याकर्षिण्यै नमः वामगुल्फे,
,, ,, , स्मृत्याकर्षिण्यै नमः वामजानुनि,
,, ,, ,, नामाकर्षिण्यै नमः वामोरौ, वामस्फिजि,
,, ,, ,, बीजाकर्षिण्यै नमः वामकरपृष्ठे, वामकरतलपृष्ठयोः,
,, ,, ,, आत्माकर्षिण्यै नमः वामकूर्परे,

ऐं ह्रीं श्रीं अमृताकर्षिण्यै नमः वामांसे,
,, ,, ,, शरीराकर्षिण्यै नमः वामकर्णपृष्ठे,
,, ,, ,, ऐं क्लीं सौः सर्वाशापरिपूरकचक्रेश्वर्यै नमः हृदये ।

एता गुप्तयोगिन्यस्सर्वाशापरिपूरके चक्रे समुद्रा इत्यादि प्राग्वत्।

**सर्वसंक्षोभणचक्रन्यासः**

ऐं ह्रीं श्रीं ह्रीं क्लीं सौः सर्वसंक्षोभणचक्राय नम इति व्यापकं न्यस्य
ऐं ह्रीं श्रीं अनङ्गकुसुमायै नमः दक्षशंखे, (ललाटास्थि)
,, ,, ,, अनङ्गमेखलायै नमः दक्षजत्रुणि, (बाहुमूलसन्धिः)
,, ,, ,, अनङ्गमदनायै नमः दक्षोरौ,
,, ,, ,, अनङ्गरेखायै नमः वामगुल्फे,
,, ,, ,, अनङ्गवेगिन्यै नमः वामोरौ,
,, ,, ,, अनङ्गांकुशायै नमः वामजत्रुणि,
,, ,, ,, अनङ्गमालिन्यै नमः वामशंखे,
,, ,, ,, ह्रीं क्लीं सौः सर्वसंक्षोभणचक्रेश्वर्यै नमः हृदये ।

एता गुप्ततरयोगिन्यः सर्वसंक्षोभणचक्रे समुद्रा इत्यादि प्राग्वत्।

**सर्वसौभाग्यदायकचक्रन्यासः**

ऐं ह्रीं श्रीं हैं ह्क्लीं ह्सौः सर्वसौभाग्यदायकचक्राय नम इति व्यापकं न्यस्य,
ऐं ह्रीं श्रीं सर्वसंक्षोभिण्यै नमः ललाटमध्ये,
,, ,, ,, सर्वविद्राविण्यै नमः ललाटदक्षभागे,
,, ,, ,, सर्वाकर्षिण्यै नमः दक्षगण्डे,
,, ,, ,, सर्वाह्लादिन्यै नमः दक्षांसे,
,, ,, ,, सर्वसंमोहिन्यै नमः दक्षपार्श्वे,
,, ,, ,, सर्वस्तम्भिन्यै नमः दक्षोरौ,
,, ,, ,, सर्वजृम्भिण्यै नमः दक्षजङ्घायाम्,
,, ,, ,, सर्ववशंकर्यै नमः वामजङ्घायाम्,
,, ,, ,, सर्वरञ्जिन्यै नमः वामोरौ,

ऐं ह्रीं श्रीं सर्वोन्मादिन्यै नमः वामपार्श्वे,
,, ,, ,, सर्वार्थसाधिन्यै नमः वामांसे,
,, ,, ,, सर्वसम्पत्तिपूरिण्यै नमः वामगण्डे,
,, ,, ,, सर्वमन्त्रमय्यै नमः ललाटवामभागे,
,, ,, ,, सर्वद्वन्द्वक्षयंकर्यै नमः शिरःपृष्ठे,
,, ,, ,, हैं ह्क्लीं ह्सौः सर्वसौभाग्यदायकचक्रेश्वर्यै त्रिपुरवासिन्यै नमः हृदये ।

एताः सम्प्रदाययोगिन्यः सर्वसौभाग्यदायके चक्रे समुद्रा इत्यादि समर्पणं न्यसेत् ।

**सर्वार्थसाधकचक्रन्यासः**

ऐं ह्रीं श्रीं ह्सैं ह्स्क्लीं ह्स्सौः सर्वार्थसाधकचक्राय नम इति व्यापकं न्यस्य,
ऐं ह्रीं श्रीं सर्वसिद्धिप्रदायै नमः दक्षनेत्रे, दक्षनासापुटे
,, ,, ,, सर्वसम्पत्प्रदायै नमः नासामूले, दक्षसृक्विणि,
,, ,, ,, सर्वप्रियंकर्यै नमः वामनेत्रे, दक्षस्तने,
,, ,, ,, सर्वमङ्गलकारिण्यै नमः वामबाहुमूले, दक्षवृषणे,
,, ,, ,, सर्वकामप्रदायै नमः वामोरुमूले, सीविन्या दक्षभागे,
,, ,, ,, सर्वदुःखविमोचिन्यै नमः वामजानुनि, सीविन्या वामभागे,
,, ,, ,, सर्वमृत्युप्रशमन्यै नमः दक्षजानुनि, वामस्तने,
,, ,, ,, सर्वविघ्नविनाशिन्यै नमः गुदे, वामवृषणे,
,, ,, ,, सर्वाङ्गसुन्दर्यै नमः दक्षोरुमूले, वामसृक्विणि,
ऐं ह्रीं श्रीं सर्वसौभाग्यदायिन्यै नमः दक्षबाहुमूले, वामनासापुटे,
ह्सैं ह्स्क्लीं ह्स्सौः सर्वार्थसाधकचक्रेश्वर्यै त्रिपुराश्रियै नमः हृदये ।

एताःकुलोत्तीर्णयोगिन्यःसर्वार्थसाधके चक्रे समुद्रा इत्यादि पूर्ववत् ।

**सर्वरक्षाकरचक्रन्यासः**

ऐं ह्रीं श्रीं ह्रीं क्लीं ब्लें सर्वरक्षाकरचक्राय नम इति व्यापकं न्यस्य,

ऐं ह्रीं श्रीं सर्वज्ञायै नमः दक्षनासापुटे,
,, ,, ,, सर्वशक्त्यै नमः दक्षसृक्विणि (ओष्ठप्रान्ते),
,, ,, ,, सर्वैश्वर्यप्रदायिन्यै नमः दक्षस्तने,
,, ,, ,, सर्वज्ञानमय्यै नमः दक्षमुष्के,
,, ,, ,, सर्वव्याधिविनाशिन्यै नमः सीविन्यां (तस्या दक्षभागे)
(सीविनी-अण्डद्वयमध्यवर्तिनी सिरा)
,, ,, ,, सर्वाधारस्वरूपायै नमः वाममुष्के, सीविन्या वामभागे,
,, ,, ,, सर्वपापहरायै नमः वामस्तने,
,, ,, ,, सर्वानन्दमय्यै नमः वामसृक्विणि,
,, ,, ,, सर्वरक्षास्वरूपिण्यै नमः वामनासापुटे,
,, ,, ,, सर्वेप्सितफलप्रदायै नमः नासाग्रे,
,, ,, ह्रीं क्लीं ब्लें सर्वरक्षाकरचक्रेश्वर्यै त्रिपुरमालिन्यै नमः हृदि
एता निगर्भयोगिन्यः सर्वरक्षाकरे चक्रे समुद्रा इत्यादि प्राग्वत्

**सर्वरोगहरचक्रन्यासः**

ऐं ह्रीं श्रीं ह्रीं श्रीं सौःसर्वरोगहरचक्राय नम इति व्यापकं न्यस्य,
ऐं ह्रीं श्रीं अं...अः (१६) ब्लूँ वशिनीवाग्देवतायै नमः दक्षचिबुके
,, ,, ,, कं...ङं (५) क्लह्रीं कामेश्वरीवाग्देवतायै नमः दक्षकण्ठे
,, ,, ,, चं...ञं (५) न्व्लीं मोदिनीवाग्देवतायै नमः हृदय
दक्षभागे,
,, ,, ,, टं...णं (५) ब्लूं विमलावाग्देवतायै नमः नाभिदक्षभागे,
,, ,, ,, तं...नं (५) ज्म्रीं अरुणावाग्देवतायै नमः नाभिवामभागे
,, ,, ,, पं...मं (५) ह्स्ल्व्यूं जयिनीवाग्देवतायै नमः हृदय
वामभागे,
,, ,, ,, यं...वं (४) झ्म्र्यूं सर्वेश्वरीवाग्देवतायै नमः वामकण्ठे
,, ,, ,, शं...क्षं (३) क्ष्म्रीं कौलिनीवाग्देवतायै नमः
वामचिबुके,
,, ,, ,, ह्रीं श्रीं सौः सर्वरोगहरचक्रेश्वर्यै त्रिपुरासिद्धायै नमः हृदि।
एता रहस्ययोगिन्यः सर्वरोगहरे चक्रे समुद्रा इत्यादि पूर्ववत्।

**आयुधन्यासः**

अथ हृदि त्रिकोणं विभाव्य तत्र प्रागादिदिक्षु क्रमेणायुधानां चतुष्टयं न्यसेत् यथा---ऐं ह्लीं श्रीं द्रां द्रीं क्लीं ब्लूं सः सर्वजम्भनेभ्यो वाणेभ्यो नमः त्रिकोणपृष्ठे,

,, ,, ,, धं सर्वसंमोहनाय धनुषे नमः त्रिकोणदक्षे, वामे,

,, ,, ,, ह्लीं सर्ववशीकरणाय पाशाय नमः त्रिकोणाग्रे, ऊर्ध्वभागे,

,, ,, ,, क्रों सर्वस्तम्भनाय अंकुशाय नमः त्रिकोणवामे, दक्षभागे।

**सर्वसिद्धिप्रदचक्रन्यासः**

ऐं ह्लीं श्रीं ह्स्रैं ह्स्क्लीं ह्स्रौः सर्वसिद्धिप्रदचक्राय नम इति व्यापकं न्यस्य,

ऐं ह्लीं श्रीं मूलप्रथमकूटं कामरूपपीठस्थायै महाकामेश्वर्यै नमः त्रिकोणाग्रकोणे,

ऐं ह्लीं श्रीं मूलद्वितीयकूटं पूर्णगिरिपीठस्थायै महावज्रेश्वर्यै नमः तद्दक्षकोणे,

ऐं ह्लीं श्रीं मूलतृतीयकूटं जालन्धरपीठस्थायै महाभगमालिन्यै नमः तद्वामकोणे,

ऐं ह्लीं श्रीं मूलं ओड्याणपीठस्थायै महात्रिपुरसुन्दर्यै नमः तन्मध्ये।

अथ तदन्तस्सपर्याप्रकरणोक्तप्रकारेण षोडशस्वरान् विभाव्य षोडशनित्या न्यसेत्। यथा-कामेश्वरीनित्यामन्त्रमुच्चार्य कामेश्वरी-नित्यायै नमः। एवं प्रकारेणावशिष्टाश्चतुर्दश नित्या विन्यस्य मध्ये मूलमुच्चार्य षोडशीं न्यसेत्।

ऐं ह्लीं श्रीं ह्स्रैं ह्स्क्लीं ह्स्रौः सर्वसिद्धिप्रदचक्रेश्वर्यै त्रिपुराम्बायै नमः हृदि।

एता अतिरहस्ययोगिन्यः सर्वसिद्धिप्रदे चक्रे समुद्रा इत्यादि प्राग्वत् चक्रसमर्पणं न्यसेत्।

**सर्वानन्दमयचक्रन्यासः**

ऐं ह्लीं श्रीं मूलं सर्वानन्दमयचक्राय नम इति व्यापकं न्यस्य,

,, ,, ,, मूलं श्रीललितायै नमः हृदयमध्ये,

एषा परापररहस्ययोगिनी सर्वानन्दमये चक्रे समुद्रा ससिद्धि सायुधा सशक्तिःसवाहना सपरिवारा न्यस्ताऽस्तु ।

ऐं ह्रीं श्रीं मूलं सर्वानन्दमयचक्रेश्वर्यै श्रीललितायै नम इति हृदि न्यस्य योनिमुद्रां प्रदर्श्य मूलं जप्त्वा पुनः कराङ्गन्यासं कुर्यात् ।

इति नित्यार्णवोक्तश्रीचक्रन्यासः ।

पूर्वोक्तौ षोढाचक्रन्यासौ श्रीषोडशाक्षर्या अपि समानौ ।

**अन्तश्चक्रन्यासः**

ओं ऐं ह्रीं श्रीं अं आं सौः चतुरस्रत्रयात्मकत्रैलोक्यमोहनचक्राधिष्ठात्र्यै अणिमादिशक्तिसहितप्रकटयोगिनीरूपायै त्रिपुरादेव्यै नमः अधस्सहस्रारे ।

ऐं क्लीं सौः षोडशदलपद्मात्मकसर्वाशापरिपूरकचक्राधिष्ठात्र्यै कामाकर्षिण्यादिषोडशशक्तिसहितायै गुप्तयोगिनीरूपायै त्रिपुरेश्वरीदेव्यै नमः अधस्सहस्रारस्योपरि विषुवसंज्ञके षड्दले ।

ह्रीं क्लीं सौः अष्टदलपद्मात्मकसर्वसंक्षोभणचक्राधिष्ठात्र्यै अनङ्गकुसुमाद्यष्टशक्तिसहितगुप्ततरयोगिनीरूपायै श्रीत्रिपुरसुन्दरीदेव्यै नमः मूलाधारे ।

हैं ह्क्लीं ह्सौः चतुर्दशारात्मकसौभाग्यदायकचक्राधिष्ठात्र्यै सर्वसंक्षोभिण्यादिचतुर्दशशक्तिसहितसम्प्रदाययोगिनीरूपायै त्रिपुरवासिनीदेव्यै नमः स्वाधिष्ठाने ।

ह्सैं ह्स्क्लीं ह्स्सौः बहिर्दशारात्मकसर्वार्थसाधकचक्राधिष्ठात्र्यै सर्वसिद्धिप्रदादिदशशक्तिसहितकुलोत्तीर्णयोगिनीरूपायै त्रिपुराश्रीदेव्यै नमः मणिपूरे ।

ह्रीं क्लीं ब्लें अन्तर्दशारात्मकसर्वरक्षाकरचक्राधिष्ठात्र्यै सर्वरक्षादिदशशक्तिसहितनिगर्भयोगिनीरूपायै त्रिपुरमालिनीदेव्यै नमः अनाहते ।

ह्रीं श्रीं सौः अष्टारात्मकसर्वरोगहरचक्राधिष्ठात्र्यै वशिन्याद्यष्टशक्तिसहितरहस्ययोगिनीरूपायै त्रिपुरासिद्धादेव्यै नमः विशुद्धौ ।

ह्स्रैं ह्स्क्लीं ह्स्रैः त्रिकोणात्मकसर्वसिद्धिप्रदचक्राधिष्ठात्र्यै कामेश्वर्यादित्रिशक्तिसहितातिरहस्ययोगिनीरूपायै त्रिपुराम्बादेव्यै नमः लम्बिकाग्रे ।

ए ह्लीं श्रीं पञ्चदशारबिन्द्वात्मकसर्वानन्दमयचक्राधिष्ठात्र्यै षडङ्गायुधदशशक्तिसहितपरापरातिरहस्ययोगिनीरूपायै श्रीमहात्रिपुरसुन्दरीदेव्यै नमः आज्ञायाम्। आज्ञाचक्रस्यैकैकांगुलोपरिदेशे।

अं आं सौः नमः बिन्दौ, ऐं क्लीं सौः नमः अर्धचन्द्रे, ह्लीं क्लीं सौः नमः रोधिन्याम्, हैं ह्क्लीं ह्सौः नमः नादे, ह्सैं ह्स्क्लीं ह्स्सौः नमः नादान्ते, ह्लीं क्लीं ब्लें नमः शक्तौ, ह्लीं श्रीं सौः नमः व्यापिकायाम्, ह्स्रैं ह्स्क्लीं ह्स्रौः नमः समनायाम्, पञ्चदशादि उन्मनायाम्, षोडशशी ब्रह्मरन्ध्रे महाबिन्दौ।

## महाषोढान्यासः

अस्य श्री महाषोढान्यासस्य ब्रह्मा ऋषिः, जगतीच्छन्दः, श्रीमदर्धनारीश्वरो देवता, श्रीविद्याङ्गत्वेन न्यासे विनियोग इति ऋष्यादि स्मृत्वा मूर्धादिषु विन्यस्याङ्गन्यासं कुर्यात्।

अङ्गन्यासस्तु—अंगुलीदेहवक्त्रात्मकः। यथा—

ओ ऐं ह्लीं श्रीं ह्सौं ह्सौः हौं ईशानाय नमः अंगुष्ठयोः
,, ,, ,, ,, ,, ,, हैं तत्पुरुषाय नमः तर्जन्योः
,, ,, ,, ,, ,, ,, हुं अघोराय नमः मध्यमयोः
,, ,, ,, ,, ,, ,, हिं वामदेवाय नमः अनामिकयोः
,, ,, ,, ,, ,, ,, हं सद्योजाताय नमः कनिष्ठिकयोः
,, ,, ,, ,, ,, ,, हौं ईशानाय नमः मूर्ध्नि
,, ,, ,, ,, ,, ,, हैं तत्पुरुषाय नमः मुखे
,, ,, ,, ,, ,, ,, हुं अघोराय नमः हृदये
,, ,, ,, ,, ,, ,, हिं वामदेवाय नमः गुह्ये
,, ,, ,, ,, ,, ,, हं सद्योजाताय नमः पादयोः
,, ,, ,, ,, ,, ,, हौं ईशानायोर्ध्ववक्त्राय नमः मूर्ध्नि,
,, ,, ,, ,, ,, ,, हैं तत्पुरुषाय पूर्ववक्त्राय नमः मुखे
,, ,, ,, ,, ,, ,, हुं अघोराय दक्षिणवक्त्राय नमः दक्षकर्णे,
,, ,, ,, ,, ,, ,, हिं वामदेवायोत्तरवक्त्राय नमः वामकर्णे
,, ,, ,, ,, ,, ,, हं सद्योजातायपश्चिमवक्त्रायनमःचोरकूपे

अयं पञ्चवक्त्रन्यासः क्रमेणांगुष्ठादिपञ्चांगुलीभिरेकैकाङ्गुलिनैकैकवक्त्रे न्यस्तव्यः। एवमङ्गन्यासं विधाय ततो ह्सां ह्सं इत्यादिभिः करषडङ्गन्यासं कृत्वा वक्ष्यमाणरूपं देवं हृदये ध्यात्व न्यसेत्।

ओघप्रकारान्तरेण ध्यानम्——

पञ्चवक्त्रं चतुर्बाहुं सर्वाभरणभूषितम्।
चन्द्रसूर्यसहस्राभं शिवशक्त्यात्मकं भजे ॥

प्रपञ्चन्यासः। स यथा——

ओं ऐं ह्रीं श्रीं ह्सौं ह्सौः अं प्रपञ्चरूपायै श्रियै नमः
,, ,, ,, ,, ,, ,, आं द्वीपरूपायै मायायै नमः
,, ,, ,, ,, ,, ,, इं जलधिरूपायै कमलायै नमः
,, ,, ,, ,, ,, ,, ईं गिरिरूपायै विष्णुवल्लभायै नमः
,, ,, ,, ,, ,, ,, उं पत्तनरूपायै पद्मधारिण्यै नमः
,, ,, ,, ,, ,, ,, ऊं पीठरूपायै समुद्रतनयायै नमः
,, ,, ,, ,, ,, ,, ऋं क्षेत्ररूपायै लोकमात्रे नमः
,, ,, ,, ,, ,, ,, ॠं वनरूपायै कमलवासिन्यै नमः
,, ,, ,, ,, ,, ,, ऌं आश्रमयरूपायै इन्दिरायै नमः
,, ,, ,, ,, ,, ,, ॡं गुहारूपायै मायायै नमः
,, ,, ,, ,, ,, ,, एं नदीरूपायै रमायै नमः
,, ,, ,, ,, ,, ,, ऐं चत्वररूपायै पद्मायै नमः
,, ,, ,, ,, ,, ,, ओं उद्भिज्जरूपायै नारायणप्रियायै नमः
,, ,, ,, ,, ,, ,, औं स्वेदजरूपायै सिद्धलक्ष्म्यै नमः
,, ,, ,, ,, ,, ,, अं अण्डजरूपायै राजलक्ष्म्यै नमः
,, ,, ,, ,, ,, ,, अः जरायुजरूपायै महालक्ष्म्यै नमः
,, ,, ,, ,, ,, ,, कं लवरूपायै आर्यायै नमः
,, ,, ,, ,, ,, ,, खं तृप्तिरूपायै उमायै नमः
,, ,, ,, ,, ,, ,, गं कलारूपायै चण्डिकायै नमः
,, ,, ,, ,, ,, ,, घं काष्ठारूपायै दुर्गायै नमः

ओं ऐं ह्रीं श्रीं ह्सौं ह्सौः ङं निमेषरूपायै शिवायै नमः

,, ,, ,, ,, ,, ,, चं श्वासरूपायै अपर्णायै नमः

,, ,, ,, ,, ,, ,, छं घटिकारूपायै अम्बिकायै नमः

,, ,, ,, ,, ,, ,, जं मुहूर्तरूपायै सत्यै नमः

,, ,, ,, ,, ,, ,, झं प्रहररूपायै ईश्वर्यै नमः

,, ,, ,, ,, ,, ,, ञँ दिवसरूपायै शाम्भव्यै नमः

,, ,, ,, ,, ,, ,, टं सन्ध्यारूपायै ईशान्यै नमः

,, ,, ,, ,, ,, ,, ठं रात्रिरूपायै पार्वत्यै नमः

,, ,, ,, ,, ,, ,, डं तिथिरूपायै सर्वमङ्गलायै नमः

,, ,, ,, ,, ,, ,, ढं वाररूपायै दाक्षायण्यै नमः

,, ,, ,, ,, ,, ,, णं नक्षत्ररूपायै हैमवत्यै नमः

,, ,, ,, ,, ,, ,, तं योगरूपायै महामायायै नमः

,, ,, ,, ,, ,, ,, थं करणरूपायै महेश्वर्यै नमः

,, ,, ,, ,, ,, ,, दं पक्षरूपायै मृडान्यै नमः

,, ,, ,, ,, ,, ,, धं मासरूपायै इन्द्राण्यै नमः

,, ,, ,, ,, ,, ,, नं राशिरूपायै सर्वाण्यै नमः

,, ,, ,, ,, ,, ,, पं ऋतुरूपायै परमेश्वर्यै नमः

,, ,, ,, ,, ,, ,, फं अयनरूपायै काल्यै नमः

,, ,, ,, ,, ,, ,, बं वत्सररूपायै कात्यायन्यै नमः

,, ,, ,, ,, ,, ,, भं युतरूपायै गौर्यै नमः

,, ,, ,, ,, ,, ,, मं प्रलयरूपायै भवान्यै नमः

,, ,, ,, ,, ,, ,, यं पञ्चभूतरूपायै ब्राह्म्यै नमः

,, ,, ,, ,, ,, ,, रं पञ्चतन्मात्ररूपायै बागीश्वर्यै नमः

,, ,, ,, ,, ,, ,, लं पञ्चकर्मेन्द्रियरूपायै वाण्यै नमः

,, ,, ,, ,, ,, ,, वं पञ्चज्ञानेन्द्रियरूपायै सावित्र्यै नमः

,, ,, ,, ,, ,, ,, शं पञ्चप्राणरूपायै सरस्वत्यै नमः

,, ,, ,, ,, ,, ,, षं गुणत्रयरूपायै गायत्र्यै नमः

,, ,, ,, ,, ,, ,, सं अन्तःकरणचतुष्टयरूपायै वाक्प्रदायैनमः

,, ,, ,, ,, ,, ,, हं अवस्थाचतुष्टयरूपायै शारदायै नमः

ऐं ह्रीं श्रीं ह्सौं ह्सौः लं सर्वधातुरूपायै भारत्यै नमः
„ „ „ „ „ „ क्षं दोषत्रयरूपायै विद्यात्मिकायै नमः

इत्येकपञ्चाशच्छक्तिमातृकास्थानेषु विन्यस्य ततः:—ऐं ह्रीं श्रीं ह्सौं ह्सौः अकारादिक्षकारान्तां मातृकामुच्चार्य सकलप्रपञ्चा देवतायै श्रीपराम्बादेव्यै नमः ह्सौः ह्सौं श्रीं ह्रीं ऐं इति सर्वा व्यापकं कुर्यात् ।

इति प्रपञ्चन्यासः

## अथ भुवनन्यासः

तत्र पादयोः—ऐं ह्रीं श्रीं ह्सौं ह्सौः अं आं इं अतललो निलयशतकोटिगुह्याद्ययोगिनीमूलदेवतायुताधारशक्त्यम्बादेव्यै नमः

गुल्फयोः—६ ईं उं ऊं वितललोकनिलयशतकोटिगुह्यतरान योगिनीमूलदेवतायुताधारशक्त्यम्बादेव्यै नमः ।

जङ्घयोः—६ ऋं ॠं लृं सुतललोकनिलयशतकोट्यतिगुह्य चिन्त्ययोगिनीमूलदेवतायुता० ।

जान्वोः—६ लॄं एं ऐं महातललोकनिलयशतकोटिमहागुह् च्छायोगिनीमूलदेवतायुता० ।

ऊर्वोः—६ ओं औं तलातललोकनिलयशतकोटिपरमगुह्ये च्छा योगिनीमूलदेवतायुता० ।

स्फिचोः—६ अं अः रसातललोकनिलयशतकोटिरहस्यज्ञान योगिनीमूलदेवतायुता० ।

मूलाधारे—६ कं खं गं घं ङं पाताललोकनिलयशतकोटिरहस् तरक्रियायोगिनीमूलदेवतायुता० ।

स्वाधिष्ठाने—६ चं छं जं झं ञं भूर्लोकनिलयशतकोट्यति रहस्यराकिनीयोगिनीमूलदेवतायुता० ।

अनाहते—६ तं थं दं धं नं स्वर्लोकनिलयशतकोटिपरमरह लाकिनीयोगिनीमूलदेवतायुता० ।

विशुद्धौ—६ पं फं बं भं मं महर्लोकनिलयशतकोटिगुप्तकाकिनी योगिनीमूलदेवतायुता० ।

आज्ञायां--६ यं रं लं वं जनोलोकनिलयशतकोटिगुप्ततरसा-किनीयोगीनीमूलदेवतायुता० ।

ललाटे--६ शं षं सं हं तपोलोकनिलयशतकोटचतिगुप्तहाकिनी-योगिनीमूलदेवतायुता० ।

ब्रह्मरन्धे--६ लं क्षं सत्यलोकनिलयशतकोटिमहागुप्तयाकिनी-योगिनीमूलदेवतायुताधारशक्त्यम्बादेव्यै नमः, इति विन्यस्य ६ समस्त-मातृकामुच्चार्य सकलभुवनाधिपायै श्रीपरम्बादेव्यै नमः ह्सौः ह्सौंः श्रीं ह्लीं ऐं ओं इति व्यापकं कुर्यात् ।

**इति भुवनन्यासः**

## अथ मूर्त्तिन्यासः

तत्र शिरसि--ओं ऐं ह्लीं श्रीं ह्सौं ह्सौः अं केशवायाक्षरशक्त्यै नमः ।

मुखे--६ आं नारायणायाद्यशक्त्यै नमः,
दक्षिणांसे--६ इं माधवायेष्टदायै नमः,
वामांसे--६ ईं गोविन्दायेशान्यै नमः,
दक्षपार्श्वे--६ उं विष्णवे उग्रायै नमः,
वामपार्श्वे--६ ऊं मधुसूदनायोर्ध्वनयनायै नमः,
दक्षकट्यां--६ ऋं त्रिविक्रमाय ऋध्यै नमः,
वामकट्यां--६ ॠं वामनाय रूपिण्यै नमः,
दक्षोरौ--६ ऌं श्रीधराय लुप्तायै नमः,
वामोरौ--६ ॡं हृषीकेशाय लूनदोषायै नमः,
दक्षजानुनि--६ एं पद्मनाभायैकनायिकायै नमः,
वामजानुनि--६ ऐं दामोदरायैकारिण्यै नमः,
दक्षजंघायां--६ ओं वासुदेवायौघवत्यै नमः,
वामजंघायां--६ औं सङ्कर्षणायौर्वकामायै नमः,
दक्षपादे--६ अं प्रद्युम्नायाञ्जनप्रभायै नमः,
वामपादे--६ अः अनिरुद्धायास्थिमालाधरायै नमः,

दक्षपादाग्रादूरुमूलपर्यन्तम्---६ कं भं भवाय कराभायै नमः,
वामपादाग्रादूरुमूलपर्यन्तम्---६ खं बं शर्वाय खगबलायै नमः,
दक्षपार्श्वे---६ गं फं हराय गरिमफलप्रदायै नमः,
वामपार्श्वे---६ घं पं पशुपतये घोरपादायै नमः,
दक्षदोर्मूले---६ ङं मं उग्राय पंक्तिवासायै नमः,
वामदोर्मूले---६ चं धं महादेवाय चन्द्रार्धधारिण्यै नमः,
कण्ठे---६ छं दं भीमाय छन्दोमय्यै नमः,
वदने---६ जं थं ईशानाय जगत्स्थानायै नमः,
दक्षकर्णे---६ झं तं तत्पुरुषाय झंकृत्यै नमः,
वामकर्णे---६ ञं नं अघोराय ज्ञानदायै नमः,
भाले---६ टं ढं सद्योजाताय टंकढक्कधरायै नमः,
शिरसि---६ ठं डं वामदेवाय टंकृतिडामयैं नमः,
मूलाधारे---६ यं ब्रह्मणे यक्षिण्यै नमः,
स्वाधिष्ठाने---६ रं प्रजापतये रञ्जिन्यै नमः,
मणिपूरके---६ लं वेधसे लक्ष्म्यै नमः,
अनाहते---६ वं परमेष्ठिने वज्रिण्यै नमः,
विशुद्धौ---६ शं पितामहाय शशिधरायै नमः,
आज्ञायां---६ षं विधात्रे षडाधारालयायै नमः,
अर्धेन्दौ---६ सं विरिञ्चये सर्वनायिकायै नमः,
रोधिन्यां---६ हं स्रष्ट्रे हसिताननायै नमः,
नादे---६ लं चतुराननाय ललितायै नमः,
नादान्ते---६ क्षं हिरण्यगर्भाय क्षमायै नमः,

इति विन्यस्य,

ओं ऐं ह्रीं श्रीं हसौं हसौः सकलमातृका उच्चार्य सकलत्रिमूर्त्यात्मिकायै श्रीपराम्बादेव्यै नमः ह्सौ ह्सौः श्रीं ह्रीं ऐं ओं इति व्यापकं कुर्यात् ।

**इति मूर्तिन्यासः**

## अथ मन्त्रन्यासः

मुलाधारे—ओं ऐं ह्लीं श्रीं ह्सौः ह्सौः अं आं इं एकलक्षकोटिभेद प्रणवाद्येकाक्षरात्मकाखिलमन्त्राधिदेवतायै सकलफलप्रदायै एककूटेश्वर्यम्बादेव्यै नमः ।

स्वाधिष्ठाने—६ ईं उं ऊं द्विलक्षकोटिभेदहंसादिद्व्यक्षरात्मकाखिलमन्त्राधिदेवतायै सकलफलप्रदायै द्विकूटेश्वर्यम्बादेव्यै नमः ।

मणिपूरके—६ ऋं ॠं लृं त्रिलक्षकोटिभेदवन्ह्यादित्र्यक्षरात्मकाखिलमन्त्राधिदेवतायै सकलफलप्रदायै त्रिकूटेश्वर्यम्बादेव्यै नमः ।

अनाहते—६ लॄं एं ऐं चतुर्लक्षकोटिभेदचन्द्रादिचतुरक्षरात्मकाखिल......चतुष्कूटेश्वर्यम्बादेव्यै नमः ।

विशुद्धे—६ ओं औं अं अः पञ्चलक्षकोटिभेदसूर्यादिपञ्चाक्षरात्मिकाखिल......पञ्चकूटेश्वर्यम्बादेव्यै नमः ।

आज्ञायां—६ कं खं गं षड्लक्षकोटिभेदसूर्यादिपञ्चाक्षरात्मकाखिल......षट्कूटेश्वर्यम्बादेव्यै नमः ।

बिन्दौ—६ घं ङं चं सप्तलक्षकोटिभेदगणपत्यादिसप्ताक्षरात्मकाखिल......सप्तकूटेश्वर्यम्बादेव्यै नमः ।

अर्धेन्दौ—६ छं जं झं अष्टलक्षकोटिभेदबटुकाद्यष्टाक्षरात्मकाखिल......अष्टकूटेश्वर्यम्बादेव्यै नमः ।

रोधिन्यां—६ ञं टं ठं नवलक्षकोटिभेदब्रह्मादिनवाक्षरात्मकाखिल......नवकूटेश्वर्यम्बादेव्यै नमः ।

नादे—६ डं ढं णं दशलक्षकोटिभेदविष्ण्वादिदशाक्षरात्मकाखिल.......दशकूटेश्वर्यम्बादेव्यै नमः ।

नादान्ते—६ तं थं दं एकादशलक्षकोटिभेदरुद्राद्येकादशाक्षरात्मकाखिल......एकादशकूटेश्वर्यम्बादेव्यै नमः ।

शक्तौ—धं नं पं द्वादशलक्षकोटिभेदवाण्यादिद्वादशाक्षरात्मकाखिल......द्वादशकूटेश्वर्यम्बादेव्यै नमः ।

व्यापिकायां—६ फं बं भं त्रयोदशलक्षकोटिभेदलक्ष्म्यादित्रयोदशाक्षरात्मिकाखिल......त्रयोदशकूटेश्वर्यम्बादेव्यै नमः ।

समानस्थाने—६ मं यं रं चतुर्दशलक्षकोटिभेदगौर्यादिचतुर्दशाक्षरात्मकाखिल.....चतुर्दशकूटेश्वर्यम्बादेव्यै नमः

उन्मन्यां—६ लं वं शं पञ्चदशलक्षकोटिभेददुर्गादिपञ्चदशाक्षरात्मकाखिल......पञ्चदशकूटेश्वर्यम्बादेव्यै नमः।

ध्रुवमण्डले—६ षं सं हं लं क्षं षोडशलक्षकोटिभेदत्रिपुरादिषोडशाक्षरात्मक......षोडशकूटेश्वर्यम्बादेव्यै नमः।

ओं ऐं ह्रीं श्रीं ह्सौं: ह्सौ: सकलमातृकामुच्चार्य सकलमन्त्राधिदेवतायै श्रीपराम्बादेव्यै नमः ह्सौः ह्सौं: श्रीं ह्रीं ऐं ओं इति व्यापकं कुर्यात्।

## इति मन्त्रन्यासः

## अथ देवतान्यासः

दक्षपादे—ओं ऐं ह्रीं श्रीं ह्सौं ह्सौ: अं आं सहस्रकोटिऋषिकुलसेवितायै निवृत्यम्बादेव्यै नमः।

वामपादे—६ इं ईं सहस्रकोटियोगिनीकुलसेवितायै प्रतिष्ठाम्बादेव्यै नमः।

दक्षगुल्फे—६ उं ऊं सहस्रकोटितपस्विकुलसेवितायै विद्याम्बादेव्यै नमः।

वामगुल्ले—६ ऋं ॠं सहस्रकोटिशान्तकुलसेवितायै शान्ताम्बादेव्यै नमः।

दक्षजंघायां—६ ऌं ॡं सहस्रकोटिमुनिकुलसेवितायै शान्त्यतीताम्बादेव्यै नमः।

वामजंघायां—६ एं ऐं सहस्रकोटिदैवतकुलसेवितायै हृल्लेखाम्बादेव्यै नमः।

दक्षजानुनि—६ ओं औं सहस्रकोटिराक्षसकुलसेवितायै गगनाम्बादेव्यैनमः।

वामजानुनि—६ अं अः सहस्रकोटिविद्याधरकुलसेवितायै रक्ताम्बादेव्यै नमः।

दक्षोरौ—६ कं खं सहस्रकोटिसिद्धकुलसेवितायै महोच्छुष्माम्बादेव्यै नमः ।

वामोरौ—६ गं घं सहस्रकोटिसाध्यकुलसेवितायै करालिकाम्बादेव्यै नमः ।

दक्षोरुमूले—६ ङं चं सहस्रकोटच्यप्सरःकुलसेवितायै जयाम्बादेव्यै नमः ।

वामोरुमूले—६ छं जं सहस्रकोटिगन्धर्वकुलसेवितायै विजयाम्बादेव्यै नमः ।

दक्षपार्श्वे—६ झं ञं सहस्रकोटिगुह्यककुलसेवितायै अजिताम्बादेव्यै नमः ।

वामपार्श्वे—६ टं ठं सहस्रकोटियक्षकुलसेवितायै अपराजिताम्बादेव्यै नमः ।

दक्षस्तने—६ डं ढं सहस्रकोटिकिन्नरकुलसेवितायै वामाम्बादेव्यै नमः ।

वामस्तने—६ णं तं सहस्रकोटिपन्नगकुलसेवितायै ज्येष्ठाम्बादेव्यै नमः ।

दक्षदोर्मूले—६ थं दं सहस्रकोटिपितृकुलसेवितायै रौद्र्यम्बादेव्यै नमः ।

वामदोर्मूले—६ धं नं सहस्रकोटिगणेश्वरकुलसेवितायै छायाम्बादेव्यै नमः ।

दक्षभुजे—६ पं फं सहस्रकोटिभैरवकुलसेवितायै कुण्डलिन्यम्बादेव्यै नमः ।

वामभुजे—६ बं भं सहस्रकोटिवटुककुलसेवितायै काल्याम्बादेव्यै नमः ।

दक्षांसे—६ मं यं सहस्रकोटिक्षेत्रेशकुलसेवितायै कालरात्र्यम्बादेव्यै नमः ।

वामांसे—६ रं लं सहस्रकोटिप्रमथकुलसेवितायै भगवत्यम्बादेव्यै नमः ।

दक्षकर्णे—६ वं शं सहस्रकोटिब्रह्मकुलसेवितायै सर्वैश्वर्यम्बादेव्यै नमः ।

वामकर्णे—६ षं सं सहस्रकोटिविष्णुकुलसेवितायै सर्वज्ञात्र्यम्बा देव्यै नमः ।

भाले—६ हं लं सहस्रकोटिरुद्रकुलसेवितायै सर्वकर्त्र्यम्बादे नमः ।

ब्रह्मरन्ध्रे—६ क्षं सहस्रकोटिचराचरकुलसेवितायै कुलशक्त्य म्बादेव्यै नमः ।

ओं ऐं ह्रीं श्रीं ह्सौं: ह्सौः सकलमातृकामुच्चार्य समस्तदेवता धियायै श्रीपराम्बादेव्यै नमः ह्सौः ह्सौंः श्रीं ह्रीं ऐं ओं इति व्याप कुर्यात् ।।

। इति देवतान्यासः

## अथ महाषोढान्यासः

मूलाधारे—ओं ऐं ह्रीं श्रीं ह्सौंः ह्सौः कं खं गं घं ङं अनन्तको भूचरीकुलसहितायै आं क्षां मङ्गलाम्बादेव्यै आं क्षां ब्रह्माण्यम्बादे अनन्तकोटिभूचरादिकुलसहिताय अं क्षं मङ्गलनाथाय अं क्षं असिताङ्ग भैरवनाथाय नमः ।

स्वाधिष्ठाने—६ चं छं जं झं ञं अनन्तकोटिखेचरीकुलसहता ईं लां चर्चिकाम्बादेव्यै ईं लां माहेश्वर्यम्बादेव्यै अनन्तकोटि वेताल कुलसहिताय इं लं चर्चिकनाथाय इं लं भैरवनाथाय नमः ।

मणिपूरके—६ टं ठं डं ढं णं अनन्तकोटिपातालचरीकुलसहता ऊं हां योगेश्वर्यम्बादेव्यै ऊं हां कौमार्यम्बादेव्यै अनन्तकोटिपिशा कुलसहिताय उं हं योगेश्वरनाथाय उं हं चण्डभैरवनाथाय नमः ।

अनाहते—६ तं थं दं धं नं अनन्तकोटिदिक्चरीकुलसहिता ॠं सां हरसिद्धाम्बादेव्यै ॠं सां वैष्णव्यम्बादेव्यै अनन्तकोट्यपस्मार कुलसहिताय ऋं सं हरसिद्धनाथाय ऋं सं क्रोधभैरवनाथाय नमः ।

विशुद्धौ—६ पं फं बं भं मं अनन्तकोटिसहचरीकुलसहिता ॡं षां भट्टिन्यम्बादेव्यै ॡं षां वाराह्यम्बादेव्यै अनन्तकोटिब्रह्म राक्षसकुलसहिताय ऌं षं भट्टिनाथाय ऌं षं उन्मत्तभैरवनाथा नमः ।

आज्ञायां--६ यं रं लं वं अनन्तकोटिगुरुचरीकुलसहितायै ऐं शां किलिकिलाम्बादेव्यै ऐं शां इन्द्राण्यम्बादेव्यै अनन्तकोटिचेटककुल-सहिताय एं शं किलिकिलनाथाय एं शं कपालिभैरवनाथाय नमः।

भाले--६ शं षं सं हं अनन्तकोटिवनचरीकुलसहितायै औं वां कालरात्र्यम्बादेव्यै औं वां चामुण्डादेव्यै अनन्तकोटिप्रेतकुलसहिताय ओं वं कालरात्रिनाथाय ओं वं भीषणभैरवनाथाय नमः।

ब्रह्मरन्ध्रे--६ लं क्षं अनन्तकोटिजलचरीकुलसहितायै अः लां भीषणाम्बादेव्यै अः लां महालक्ष्म्यम्बादेव्यै अनन्तकोटिकूष्माण्डकुल सहिताय अं लं भीषणनाथाय अं लं संहारभैरवनाथाय नमः।

ओं ऐं ह्रीं श्रीं ह्सौंः ह्सौः समस्तमातृका उच्चार्य समस्तमातृका भैरवाधिदेवतायै श्रीपरम्बादेव्यै नमः ह्सौः ह्सौंः श्रीं ह्रीं ऐं ओं इति व्यापकं कुर्यात्।

इति महाषोढान्यासः

अनन्तरं पूर्वोक्तैः ह्सां ह्सीं इत्यादिभिः करषडङ्गन्यासं विधाय देवं ध्यायेत्। यथा--

अमृतार्णवमध्योद्यत्स्वर्णद्वीपे मनोरमे।
कल्पवृक्षवनान्तःस्थे नवमाणिक्यमण्डपे॥
नवरत्नमय श्रीमत्सिंहासनगताम्बुजे।
त्रिकोणान्तस्समासीनं चन्द्रसूर्यायुतप्रभम्॥
अर्धाम्बिकासमायुक्तं प्रविभक्तविभूषणम्।
कोटिकन्दर्पलावण्यं सदा षोडशवार्षिकम्॥
मन्दस्मितमुखाम्भोजं त्रिणेत्रं चन्द्रशेखरम्।
दिव्याम्बरस्त्रगालेपं दिव्याभरणभूषितम्॥
पानपात्रञ्च चिन्मुद्रां त्रिशूलं पुस्तकं करैः।
विद्यासंसदि बिभ्राणं सदानन्दमुखेक्षणम्।
महाषोढोदिताशेषदेवतागणसेवितम्।
एवं चित्ताम्बुजे ध्यायेदर्धनारीश्वरं शिवम्॥
पुरुषञ्च स्मरेद्देवि स्त्रीरूपञ्च विचिन्तयेत्।

अथवा निष्कलं ध्यायेत्सच्चिदानन्दक्षणम् ॥
सर्वतेजोमयं ध्यायेत्सचराचरविग्रहम् ॥

इति स्वाभेदेन ध्यात्वा योनि-लिङ्ग-सुरभि-कपाल-ज्ञान-त्रिशूल-पुस्तक-वनमाला-नभो-महामुद्रा इति दशमुद्राः प्रदर्श्य शिरसि श्रीगुरुं ध्यायेत् । यथा—

सहस्रदलपंकजे सकलशीतरश्मिप्रभं
वराभयकराम्बुजं विमलगन्धपुष्पाम्बरम् ।
प्रसन्नवदनेक्षणं सकलदेवतारूपिणं
स्मरेच्छिरसि हंसगं तदभिधानपूर्वं गुरुम् ॥

इति श्रीगुरुं ध्यात्वा तद्विद्यया तत्पादुकां शिरसि विन्यस्य प्रणम्य स्वगुरुकृतं स्वनाम स्वमूलाधारे स्मृत्वा शिवरूपं स्वात्मानं ध्यायेत् ॥

**अथ महाषोढान्यासफलं कुलार्णवे—**

एवं न्यासे कृते देवि साक्षात्परशिवो भवेत् ।
मन्त्री न चात्र सन्देहो निग्रहानुग्रहक्षमः ॥
महाषोढाह्वयं न्यासं यः करोति दिने दिने ।
देवास्सर्वे नमस्यन्ति तं नमामि न संशयः ॥
महाषोढाह्वयं न्यासं यत्र मन्त्री न्यसेततः ।
दिव्यक्षेत्रं समुद्दिष्टं समन्ताद्दशयोजनम् ॥
कृत्वा न्यासमिमं देवि यत्र गच्छति मानवः ।
तत्र श्रीर्विजयो लाभः स मान्यः पुरुषः प्रिये ॥
महाषोढाकृतन्यासः त्वदीक्षायाभिवन्दिते ।
स मासान्मृत्युमाप्नोति यदि त्राता शिवः स्वयम् ॥
वज्रपञ्जरनामानमेवं न्यासं करोति यः ।
दिव्यान्तरिक्षभूशैलजलारण्यनिवासिनः ॥
उद्दण्डभूतवेतालदेवरक्षोग्रहादयः ।
भयग्रस्तेन मनसा नेक्षन्ते साधकं प्रिये ॥
महाषोढाह्वयं न्यासं ब्रह्मविष्णुशिवादयः ।
देवास्सर्वे प्रकुर्वन्ति ऋषयश्च मुनीश्वराः ॥

बहुनोक्तेन किं देवि सुशिष्याय प्रकाशयेत् ।
अक्षयां लभते सिद्धिं रहसि न्यासमाचरेत् ।।
अस्मात्परतरस्साक्षाद्दैवताभावसिद्धिदः ।
लोके नास्ति न सन्देहः सत्यं सत्यं न संशयः ।।
ऊर्ध्वाम्नायप्रवेशश्च पराप्रासादचिन्तनम् ।
महाषोढापरिज्ञानं नाल्पस्य तपसः फलम् ।।

इति महाषोढान्यासफलम् ।।

## वर्धनीपात्रस्थापनम्

स्वपुरतो वामभागे† त्रिकोणवृत्तचतुरस्रात्मकं मण्डलं मत्स्यमुद्रया विलिख्य मूलेनाभ्यर्च्य कर्पूरादिवासितजलपूरितकलशं गन्धपुष्पाक्षतादिभिरलंकृत्य तत्र स्थापयेत् ।

कलशस्य मुखे विष्णुः कण्ठे रुद्रस्समाश्रितः ।
मूले तत्र स्थितो ब्रह्मा मध्ये मातृगणाः स्थिताः ।।
कुक्षौ तु सागरास्सर्वे सप्तद्वीपा वसुन्धरा ।
ऋग्वेदोऽथ यजुर्वेदः समवेदोऽप्यथर्वणः ।।
अङ्गैश्च सहितास्सर्वे कलशन्तु समाश्रिताः ।।

इत्यनेन मूलमन्त्रेण चाभिमन्त्रयेत्, धेनुमुद्राञ्च प्रदर्शयेत् । तज्जलेन पूजोपकरणान्यात्मानञ्च प्रोक्षेत् ।

तद्दक्षिणतो वर्धनीजलेन बिन्दुत्रिकोणवृत्तचतुरस्रात्मकं मण्डलं मत्स्यमुद्रया निर्माय चतुरस्रे अग्नीशानासुरवायुकोणेषु मध्ये दिक्षु च क्रमेण—

ओं ऐं ह्रीं श्रीं ऐं हृदयाय नमः, (आग्नेये)
ओं ऐं ह्रीं श्रीं क्लीं शिरसे स्वाहा (ईशान्ये)
ओं ऐं ह्रीं श्रीं सौः शिखायै वषट् (नैर्ऋतौ)
ओं ऐं ह्रीं श्रीं ऐं कवचाय हुम् (वायव्ये)

---

† एतादृशानां मण्डलानां चित्राणि मुद्राणां प्रकाराश्च परिशिष्टे विलोकनीयाः ।

ओं ऐं ह्रीं श्रीं क्लीं नेत्रत्रयाय वौषट्, (मध्ये)

ओं ऐं ह्रीं श्रीं क्लीं सौः अस्त्राय फट्,

इति प्रागादिदिक्षु च पूजयेत् ।

षट्कोणे च स्वाग्रादि प्रादक्षिण्येन ओं ऐं ह्रीं श्रीं ऐं क ए ई ल ह्रीं हृदयाय नमः हृदयशक्तिश्रीपादुकां पूजयामि,

४ क्लीं ह स क ह ल ह्रीं शिरसे स्वाहा शिरश्शक्तिश्रीपादुकां पूजयामि,

४ सौः स क ल ह्रीं शिखायै वषट् शिखाशक्तिश्रीपादुकां पूजयामि

४ ऐं क ए ई ल ह्रीं कवचाय हुं कवचशक्तिश्रीपादुकां पूजयामि,

४ क्लीं ह स क ह ल ह्रीं नेत्रत्रयाय वौषट् नेत्रशक्तिश्रीपादुकां पूजयामि,

४ सौः स क ल ह्रीं अस्त्राय फट् अस्त्रशक्तिश्रीपादुकां पूजयामि ।

त्रिकोणे स्वाग्रादि प्रादक्षिण्येन——

४ ऐं क ए ई ल ह्रीं नमः, ४ क्लीं ह स क ह ल ह्रीं नमः, ४ सौः स क ल ह्री नमः इति पूजयित्वा, सकलेन मूलमन्त्रेणओंकारत्रितारी-बालायुक्तेन नमोऽन्तेन बिन्दुम् पूजयेत् ।

ओं ऐं ह्रीं श्रीं अस्त्राय फट् इति मन्त्रेण क्षालितं चतुरंगुलविस्तारोत्सेधं स्वर्णरूप्यादिमयं त्रिपदं चतुष्पदं षट्पदमष्टपदं वाऽऽधारं ओं ऐं ह्रीं श्रीं अं अग्निमण्डलाय दशकलात्मने सामान्यार्घ्यपात्राधाराय नम इति मण्डले निधाय ।

ओं ऐं ह्रीं श्रीं अग्नि दूतं वृणीमहे होतारं विश्ववेदसम् । अस्य यज्ञस्य सुक्रतुम् रां रीं रूं रैं रौं रः रमलवरयूं अग्निमण्डलाय नमः'

इत्यग्निमण्डलत्वेन तद्विभाव्य, दशवह्निकलाः पूजयेत्——

ओं ऐं ह्रीं श्रीं यं धूम्रार्चिषे नमः,

ओं ऐं ह्रीं श्रीं रं ऊष्मायै नमः,

ओं ऐं ह्रीं श्रीं लं ज्वलिन्यै नमः,

ओं ऐं ह्रीं श्रीं वं ज्वालिन्यै नमः

ओं ऐं ह्रीं श्रीं शं विस्फुलिङ्गिन्यै नमः,

ओं ऐं ह्रीं षं सुश्रियै नमः,

ओं ऐं ह्लीं श्रीं सं सुरूपायै नमः,

ओं ऐं ह्लीं श्रीं हं कपिलायै नमः,

ओं ऐं ह्लीं श्रीं लं हव्यवाहायै नमः,

ओं ऐं ह्लीं श्रीं क्षं कव्यवाहायै नमः,

ओं ऐं ह्लीं श्रीं अस्त्राय फट्, इति क्षालितं शंखं गृहीत्वा,

'ओं ऐं ह्लीं श्रीं उं सूर्यमण्डलाय द्वादशकलात्मनेऽर्घ्यपात्राय नमः'

**त्वं पुरा सागरोत्पन्नो विष्णुना विधृतः करे।**
**निर्मितस्सर्वदेवैश्च पाञ्चजन्य नमोऽस्तु ते ॥**

'ओं पाञ्चजन्याय विद्महे पावमानाय धीमहि तन्नः शंखः प्रचोदयात्'

इति मन्त्रेण शंखं पूजयित्वा,

'४ आसत्येन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यञ्च। हिरण्ययेन सविता रथेना देवो याति भुवना विपश्यन्' ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः ह म ल-वरयूं सूर्यमण्डलाय नमः'

इति सूर्यमण्डलत्वेन विभाव्य, तत्र द्वादशसूर्यकलाः पूजयेत्। तद्यथा--

ओं ऐं ह्लीं श्री कं भं तपिन्यै नमः, ४ खं बं तापिन्यै नमः, ४ गं फं धूम्रायै नमः, ४ घं पं मरीच्यै नमः, ४ ङं नं ज्वालिन्यै नमः, ४ चं धं रुच्यै नमः, ४ धं दं सुषुम्नायै नमः, ४ जं थं भोगदायै नमः, ४ झं तं विश्वायै नमः, ४ ञं णं बोधिन्यै नमः, ४ टं ढं धारिण्यै नमः, ४ ठं डं क्षमायै नमः।

तत्र शंखे 'ओं ऐं ह्लीं श्रीं मं सोममण्डलाय षोडशकलात्मने अर्घ्यामृताय नमः'।

इति वर्धनीसलिलमापूर्य तत्र क्षीरबिन्दुं विक्षिप्य,

'४ आप्यायस्व समेतु ते विश्वतस्सोमवृष्णियम्। भवावाजस्य संगथे सां सीं सूं सैं सौं सः स म ल व र यूं सोममण्डलाय नमः' इति सोममण्डलत्वेन विभाव्य सोमकलाः पूजयेत्--

४ अं अमृतायै नमः, ४ आं मानदायै नमः, ४ इं पूषायै नमः, ४ ईं तुष्ट्यै नमः, ४ उं पुष्ट्यै नमः, ४ ऊं रत्यै नमः,

४ ॠं धृत्यै नमः, ४ ॠं शशिन्यै नमः, ४ लृं चन्द्रिकायै नमः,
४ लॄं कान्त्यै नमः, ४ एं ज्योत्स्नायै नमः, ४ ऐं श्रियै नमः ४ ओं प्रीत्यै नमः, ४ औं अङ्गदायै नमः, अं पूर्णायै नमः अः पूर्णामृतायै नमः ।

तस्मिन् अग्नीशासुरवायुकोणेषु मध्ये दिक्षु च क्रमेण प्रणवत्रितारीयुतैः द्विरावृत्तैः मूलकूटत्रिखण्डैः पुष्पादिभिः षडङ्गानि पूजयेत् ।

षोडश्युपासकस्तु षोडशाक्षर्या यथास्थितेन कूटषट्केनैव पूजयेत् । अनन्तरं अस्त्रमन्त्रेण संरक्ष्य कवचमन्त्रेणावगुण्ठ्यावगुण्ठनधेनुयोनिमुद्राः प्रदर्श्य, मूलेन सकृदभिमन्त्र्य, तज्जलबिन्दुभिः पूजोपकरणान्यात्मानञ्च सम्प्रोक्ष्य शंखजलं वर्द्धन्यां किञ्चिन्निक्षिपेत् ।

**अथ विशेषार्घ्यविधिः—**

सामान्यार्घ्योदकेन तद्दक्षिणतो बिन्दुत्रिकोणषट्कोणवृत्तचतुरस्रात्मकं मण्डलं विलिख्य, चतुरस्रे प्राग्वत् षडङ्गानि विन्यस्य, प्राग्वदेव सम्पूज्य, 'अस्त्राय फट्' इत्याधारं प्रक्षाल्य, ओं ऐं ह्रीं श्रीं ऐं कं ई ल ह्रीं अं अग्नि-मण्डलाय दशकात्मनेऽर्घ्यपात्राधाराय नमः इत्याधारं संस्थाप्य 'अग्निं दूतम्' इति मन्त्रेणाधारं वह्निमण्डलत्वेन विचिन्त्य दश वह्नि कलाः पूर्ववदेव पूजयेत् । अस्त्रमन्त्रेण प्रक्षालितं सुवर्णशंखादिमयं पात्रं '४ क्लीं ह स क ह ल ह्रीं सूर्यमण्डलाय द्वादशकलात्मनेऽर्घ्यपात्राय नमः' इति विशेषार्घ्यपात्रमाधारोपरि स्थापयेत् । 'ओं ऐं ह्रीं श्रीं ह्रीं ऐं महालक्ष्मि, ईश्वरि, परमस्वामिनि, ऊर्ध्वशून्यप्रवाहिनि, सोमसूर्याग्नि भक्षिणि, परमाकाशभासुरे आगच्छ आगच्छ विश विश पात्रं प्रति- गृह्ण प्रतिगृह्ण हुं फट् स्वाहा' इति मन्त्रेण पुष्पाञ्जलिं विकीर्य, 'आस- त्येन रजसा' इति मन्त्रेण विशेषार्घ्यपात्रे सूर्यमण्डलत्वं विभाव्य, पूर्ववत् द्वादश सूर्यकलाः पूजयेत् । ततः ४ सौः 'स क ल ह्रीं सूर्यमण्डलाय षोडशकलात्मने विशेषार्घ्यामृताय नमः' इतिकलशे कस्तूरिकाद्यधिवासितं क्षीरं आदिक्षान्तं क्षाद्यकारान्तं मातृकया पूरयित्वा अष्टगन्धलोलितं पुष्प निधाय आर्द्रकनागरिकादिखण्डं निक्षिप्य, पूर्ववच्चन्द्रकलाः पूजयित्वा, तत्र विशेषार्घ्ये स्वाग्रादि-प्रादक्षिण्येन अकथादिषोडशवर्णात्मकरेखायंत्र

त्रिकोणं विलिख्य तदन्तः स्वाग्रादिकोणेषु प्रादक्षिण्येन हलक्षान् विलिख्य, बहिश्च मूलखण्डत्रयं,बिन्दौ तुरीयस्वरं सबिन्दुम्,तद्वामदक्षयोः हं सः इति च वर्णौ विलिख्य ४ हंसः इति मन्त्रेणाराध्य, त्रिकोणस्य परितो वृत्तं निर्माय, तद्बहिश्च षट्कोणं निर्माय स्वाग्रकोणादिप्रादक्षिण्येन प्रागुक्त-षडङ्गमन्त्रैः षडङ्गयुवतीरभिपूज्य,'४ मूलम् तां चिन्मयीमानन्दलक्षणा-ममृतकलशपिहितहस्तद्वयां प्रसन्नां देवीं पूजयामि नमः स्वाहा' इति सुधादेवीमभ्यर्च्य, तदर्घ्यं किञ्चित्पात्रान्तरे ४ वषट् इत्युद्धृत्य, पुनः ४ स्वाहा इति तत्रैव निक्षिप्य, ४ हुं इत्यवगुण्ठ्य, ४ वौषडिति धेनु-मुद्रयाऽमृतीकृत्य, ४ फट् इति संरक्ष्य, ४ नम इति पुष्पं दत्वा, गालिन्या ४ मूलेन निरीक्ष्य, योनिमुद्रया नत्वा, मूलेन प्रणवोपेतत्रितारेण सकृद-भिमन्त्र्य, गन्धाक्षतपुष्पधूपदीपान् दत्वा, विशेषार्घ्यबिन्दुभिः समुक्षित सपर्यासाधनः, सर्वं विद्यामयं विभाव्य, विशेषार्घ्यपात्रं करेण संस्पृश्य चतुर्नवत्या मन्त्रैरभिमन्त्रयेत् ।

तत्र दश वह्निकलामन्त्राः, द्वादश सूर्यकलामन्त्राः षोडशा-मृतकलामन्त्राश्च पूर्ववद्ग्राह्याः ।

'ओं ऐं ह्रीं श्रीं सृष्ट्यै नमः, ४ ऋध्यै नमः ४ स्मृत्यै नमः,४ मेधायै नमः, ४ कान्त्यै नमः, ४ लक्ष्म्यै नमः, ४ द्युत्यै नमः, ४ स्थिरायै नमः, ४ स्थित्यै नमः, ४ सिध्यै नमः' इति ब्रह्मकलामन्त्रैः,

'ओं ऐं ह्रीं श्रीं जरायै नमः, ४ पालिन्यै नमः, ४ शान्त्यै नमः, ४ ईश्वर्यै नमः, ४ रत्यै नमः, ४ कामिन्यै नमः, ४ वरदायै नमः, ४ ह्लादिन्यै नमः, ४ प्रीत्यै नमः, ४ दीर्घायै नमः' इति विष्णुकलामन्त्रैः, 'ओं ऐं ह्रीं श्रीं तीक्ष्णायै नमः, ४ रौद्र्यै नमः, ४ भयायै नमः, ४ निद्रायै नमः, ४ तन्द्र्यै नमः, ४ क्षुधायै नमः, ४ क्रोधिन्यै नमः , ४ क्रियायै नमः, ४ उद्गार्यै नमः, ४ मृत्यवे नमः' इति रुद्रकलामन्त्रैः, 'ओं ऐं ह्रीं श्रीं पीतायै नमः, ४ श्वेतायै नमः, ४ अरुणायै नमः, ४ असितायै नमः' इतीश्वरकलामन्त्रैः,

'ओं ऐं ह्रीं श्रीं निवृत्यै नमः, ४ प्रतिष्ठायै नमः, ४ विद्यायै नमः, ४ शान्त्यै नमः, ४ इन्धिकायै नमः, ४ दीपिकायै नमः, ४ रेचिकायै नमः, ४ मोचिकायै नमः, ४ परायै नमः, ४ सूक्ष्मायै नमः,

४ सूक्ष्मामृतायै नमः, ४ ज्ञानायै नमः, ४ ज्ञानामृतायै नमः, ४ आप्यायिन्यै नमः, ४ व्यापिन्यै नमः, ४ व्योमरूपायै नमः' इति सदाशिवकलामन्त्रैश्चाभिमन्त्रयेत् ।

**अनन्तरं वैदिकमन्त्रपूजनम्—**

'ओं ऐं ह्रीं श्रीं हꣳसश्शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्' नमः ।

४ 'तद्विष्णुस्तवते वीर्याय मृगो न भीमः कुचरो गिरिष्ठाः । यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा नमः' ।

४ 'त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात्' नमः ।

४ 'तद्विष्णोः परमं पदꣳ सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् । तद्विप्रासो विपन्यवो जागृवाँसः समिन्धते । विष्णोर्यत्परमं पदम्' नमः ।

४ 'विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिꣳशतु । आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते ।। गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति । गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजा' ।। नमः ।

४ मूलमन्त्रः नमः ।

आहत्य षट् । पूर्वमुक्ता अष्टाशीतिः । तथा च मन्त्राश्चतुर्नवतिः ।।९४।।

केषाञ्चिन्मते—

**४ अखण्डैकरसानन्दकरे परसुधात्मनि ।**
**स्वच्छन्दस्फुरणामत्र विधेहि कुलनायिके ।।नमः।।**
**४ अकुलस्थामृताकारे शुद्धज्ञानकरे परे ।**
**अमृतत्वं निधेह्यस्मिन् वस्तुनि क्लिन्नरूपिणि ।।नमः।।**
**४ त्वद्रूपिण्यैकरस्यत्वं कृत्वा ह्येतत्स्वरूपिणि ।**
**भूत्वा परामृताकारा मयि चित्स्फुरणं कुरु ।।नमः।।**

४ 'ऐं ब्लूं झ्रौं जुं सः अमृते अमृतोद्भवे अमृतेश्वरि अमृतवर्षिणि अमृतं स्रावय स्रावय स्वाहा' नमः ।

४ 'ऐं वद वद वाग्वादिनि ऐं क्लीं क्लिन्ने क्लेदिनि क्लेदय क्लेदय महाक्षोभं कुरु कुरु क्लीं सौः मोक्षं कुरु कुरु ह्सौंः स्हौंः' नमः ।

इत्येतैरपि पञ्चभिर्मन्त्रैरभिमन्त्रणं भवति । आहत्य मन्त्रपिण्ड-संख्या-एकोनशतम् ।।९९।।

एवमभिमन्त्रिताद्विशेषार्घ्यात् पात्रान्तरेण किञ्चिदुद्धृत्य तद्बिन्दुभिः त्रिवारं स्वगुरुपादुकामन्त्रेण शिरसि स्वगुरुं यजेत् । सन्निहिताय तु निवेदयेत् । स्वयञ्चात्मपात्रे किञ्चिद्विशेषार्घ्यामृतमुद्धृत्य मूलाधारेऽनादिवासनारूपेन्धनप्रज्वलितं कुण्डलिन्यधिष्ठितं चिदग्निमण्डलं ध्यात्वा 'कुण्डलिन्यधिष्ठितचिदग्निमण्डलाय नमः' इति मनसा सम्पूज्य '४ मूलं पुण्यं जुहोमि स्वाहा' '४ मूलं पापं जुहोमि स्वाहा' '४ मूलं कृत्यं जुहोमि स्वाहा' '४ मूलं अकृत्यं जुहोमि स्वाहा' '४ मूलं सङ्कल्पं जुहोमि स्वाहा' '४ मूलं विकल्पं जुहोमि स्वाहा' '४ मुलं धर्मं जुहोमि स्वाहा' '४ अधर्मं जुहोमि स्वाहा' ।

'इतः पूर्वं प्राणबुद्धिदेहधर्माधिकारतः जाग्रत्स्वप्नसुषुप्त्यवस्थासु मनसा वाचा कर्मणा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना यत्स्मृतं यदुक्तं यत्कृतं तत्सर्वं ब्रह्मार्पणं भवतु स्वाहा' ।

इति पूर्णाहुतिं विभाव्य,

'४ आर्द्रं ज्वलति ज्योतिरहमस्मि, ज्योतिर्ज्वलति ब्रह्माहमस्मि, योऽहमस्मि ब्रह्माहमस्मि, अहमस्मि ब्रह्माहमस्मि, अहमेवाहं मां जुहोमि स्वाहा' इत्यात्मनः कुण्डलिनीरूपे चिदग्नौ होमबुध्या जुहुयात् । विशेषार्घ्यात् किञ्चित्क्षीरं कलशे निःक्षिपेत् । आ विसर्जनं शङ्खं विशेषार्घ्यपात्रञ्च न चालयेत् ।

## अन्तर्यागः.

स च ज्ञानार्णवे दृष्टः । यथा—मूलाधारादाब्रह्मबिलं विलसन्तीं बिसतन्तुतनीयसीं विद्युत्पुञ्जपिञ्जरां विवस्वदयुतभास्वत्प्रकाशां परश्शतसुधामयूखशीतलतेजोदण्डरूपां परचितिं ध्यायेत् ।

ध्यानम्—

ध्यायेन्निरामयं वस्तु जगत्त्रयविमोहिनीम् ।
अशेषव्यवहाराणां स्वामिनीं संविदं पराम् ।।
उद्यत्सूर्यसहस्राभां दाडिमीकुसुमप्रभाम् ।
जपाकुसुमसङ्काशां पद्मरागमणिप्रभाम् ।।
स्फुरत्पद्मनिभां तप्तकाञ्चनाभां सुरेश्वरीम् ।
रक्तोत्पलदलाकारपादपल्लवराजिताम् ।।
अनर्घरत्नखचितमञ्जीरचरणद्वयाम् ।
पादाङ्गुलिनखोत्क्षिप्तरत्नतेजोविराजिताम् ।।
कदलीललितस्तम्भसुकुमारोरुकोमलाम् ।
नितम्बबिम्बविलसद्रक्तवस्त्रपरिष्कृताम् ।।
मेखलाबद्धमाणिक्यकिङ्किणीनादविभ्रमाम् ।
अलक्ष्यमध्यमां निम्ननाभिं शातोदरीं पराम् ।।
रोमराजिवनोद्भूतमहाकुलफलान्विताम् ।
सुवृत्तनिबिडोत्तुङ्गकुचमण्डलराजिताम् ।।
अनर्घमौक्तिकस्फारहारभारविराजिताम् ।
नवरत्नप्रभाराजद्ग्रैवेयकविभूषणाम् ।।
श्रुतिभूषामनोरम्यकपोलस्थलमञ्जुलाम् ।
उद्यदादित्यसंकाशताटङ्कसुमुखप्रभाम् ।।
पूर्णचन्द्रमुखीं पद्मवदनां वरनासिकाम् ।
स्फुरन्मदनकोदण्डसुभ्रुवं पद्मलोचनाम् ।।
ललाटपट्टसंराजद्रत्नाढ्यतिलकाङ्किताम् ।
मुक्तामाणिक्यघटितमुकुटस्थलकिङ्किणीम् ।।
स्फुरच्चन्द्रकलाराजन्मुकुटाञ्च त्रिलोचनाम् ।
प्रवालवल्लीविलसद्बाहुवल्लीचतुष्टयाम् ।।
इक्षुकोदण्डपुष्पेषुपाशाङ्कुशचतुर्भुजाम् ।
सर्वदेवमयीमम्बां सर्वसौभाग्यसुन्दरीम् ।।
सर्वतीर्थमयीं दिव्यां सर्वकामप्रपूरणीम् ।

सर्वमन्त्रमयीं नित्यां सर्वागमविशारदाम् ।।
सर्वक्षेत्रमयीं देवीं सर्वविद्यामयीं शिवाम् ।
सर्वयागमयीं विद्यां सर्वदेवस्वरूपिणीम् ।।
सर्वशास्त्रमयीं नित्यां सर्वागमनमस्कृताम् ।
सर्वाम्नायमयीं देवीं सर्वार्थिजनसेविताम् ।।
सर्वानन्दमयीं शास्त्रगह्वरां संविदं पराम् ।
एवं ध्यायेत्परामम्बां सच्चिदानन्दरूपिणीम् ।।

एवं ध्यात्वा 'ओं ऐं ह्रीं श्रीं ह्स्रं ह्स्क्लरीं ह्स्रौं :

महापद्मनान्तःस्थे कारणानन्दविग्रहे ।
सर्वभूतहिते मातरेह्येहि परमेश्वरि ।।

इति मन्त्रेण बिन्दुपीठगतनिर्विशेषब्रह्मात्मकश्रीमत्कामेश्वराङ्के परदेवतामावाहयेत्——

'४ मूलम् आवाहिता भव, ४ मूलं संस्थापिता भव, ४ मूलं संनिधापिता भव, ४ मूलं सन्निरुद्धा भव, ४ मूलं सम्मुखी भव, ४ मूलं अवगुण्ठिता भव' इति मन्त्रैरावाहनादिमुद्राः प्रदर्श्य वन्दनधेनुयोनिमुद्राश्च प्रदर्शयेत् ।

ततो मूलाधारादधो भागेऽकुलसहस्रारे भूपुरस्थितदेवीः, तदुपरिस्थिते विषुवनाम्नि रक्तवर्णषड्दलपद्मे षोडशदलदेवीः, मूलाधारे चतुर्दलेऽष्टदलदेवीः, स्वाधिष्ठाने षड्दले चतुर्दशारदेवीः, मणिपूरे दशदले बहिर्दशारदेवीः, अनाहते द्वादशदलेऽन्तर्दशारदेवीः, विशुद्धौ षोडशदलेऽष्टारदेवीः, लम्बिकाग्रे आयुधदेवीः, त्रिकोणदेवीश्च, आज्ञायां द्विदले बिन्दुगतदेवीञ्च ध्यात्वा ; हृदि श्रीचक्रं विभाव्य तत्र तां ध्यात्वा, तत्तदग्रे जीवात्मानं पुष्पपूरिताञ्जलिं निविष्टं ध्यायन् तत्तत्पूजामन्त्रैः तत्तदावरणपूजां देव्या वामहस्ते पूजासमर्पणञ्च विभाव्य, श्री राजराजेश्वर्यां सचक्रावयवान्यावरणानि विलीनानि विभाव्य, मध्यत्र्यश्राग्रे स्थितजीवात्मना सन्निहितां देवीं हृदयं नीत्वा तां सम्पूज्य ततः इन्दुगलितामृतधारारूपिणीः चन्दनकुसुमधूपदीपनैवेद्यशालिकरकमलाः पीतासितश्यामरक्तशुक्लवर्णाः धरणिवियदनिलानलजलल-

क्षणपञ्चभूतमयीः सर्वावयवसुन्दरीः पञ्चदेवताः देव्यग्रे संस्मृत्य ताभिस्सह चन्दनाद्युपचारान् श्रीदेव्यै समर्पितान् स्मारं स्मारं पञ्चोपचारमुद्भाव्य, नासायां गन्धदेवता, श्रोत्रे पुष्पदेवता, नाभौ धूपदेवता नयने दीपदेवता, जिह्वायां नैवेद्यदेवताः क्रमेण विलीना विभाव्य मूलविद्यामुच्चारयन् जीवात्मानं देव्याः पादमूले लीनं विभाव्य हृदयगतदेवीरूपं ध्यायन् संक्षोभिण्यादि नवमुद्राः प्रदर्श्य क्षणं न किञ्चिदपि चिन्तयत् ।

## चतुष्षष्ट्युपचारार्चनम्

ऐं ह्रीं श्रीं ललितायै पाद्यं कल्पयामि नमः, ३ आभरणावरोपणम्, ३ सुगन्धितैलाभ्यङ्गम्, ३ मज्जनशालाप्रवेशनम्, ३ मज्जनमण्डपमणिपीठोपवेशनम्, ३ दिव्यस्नानीयोद्वर्तनम्, ३ उष्णोदकस्नानम्, कनककलशच्युतसकलतीर्थाभिषेकम्, (अत्र श्रीसूक्तदीनामावृत्तिः) ३ धौतवस्त्रपरिमार्जनम्, ३ अरुणदुकूलपरिधानम्, ३ अरुणकुचोत्तरीयम्, ३ आलेपमण्डपप्रवेशनम्, ३ आलेपमण्डपमणिपीठोपवेशनम्, ३ चन्दनागुरुकुङ्कुममृगमदकर्पूरकस्तूरिगोरोचनादिदिव्यगन्धसर्वाङ्गीणविलेपनम्, ३ केशभारस्य कालागरुधूपम्, ३ मल्लिकामालतीजातीचम्पकाशोकशतपत्रपूगकुहलीपुन्नागकल्हारमुख्यसर्वर्तुकुसुममालाः, ३ भूषणमण्डपवेशनम्, ३ भूषणमण्डपमणिपीठोपवेशनम्, ३ नवमणिमकुटम्, ३ चन्द्रशकलम्, ३ सीमन्तसिन्दूरम्, ३ तिलकरत्नम्, ३ कालाञ्जनम्, ३ पालीयुगलम्, ३ मणिकुण्डलयुगलम्, ३ नासाभरणम्, ३ अधरयावकम्, ३ प्रथमभूषणम् (माङ्गल्यसूत्रम्) ३ कनकचिन्ताकम् (एतच्चान्ध्रपुरन्ध्रीजनेन ध्रियमाणः कर्ण (कण्ठ) भूषणविशेषः) ३ पदकम्, ३ महापदकम्, ३ मुक्तावलिम् ३ एकावलिम्, ३ छन्नवीरम्, ३ (इदञ्चोभयतो वैकक्ष्यदामात्मकं भूषणम्), ३ केयूरयुगलचतुष्टयम्, ३ वलयावलिम्, ३ ऊर्मिकावलिम्, ३ काञ्चीदाम, ३ कटिसूत्रम्, ३ सौभाग्याभरणम्, (जघनालम्बी भूषणपवशेषः) ३ पादकटकम्, ३ रत्ननूपुरम्, पादाङ्गुलीयकम्, ३ एककरे पाशम्, ३ अन्यकरेऽङ्कुशम्, ३ इतरकरे पुण्ड्रेक्षुचापम्, ३ अपरकरे पुष्पबाणान् कल्पयामि नमः ।

(तत्रोर्ध्वयोर्वामदक्षयोः करयोः पाशांकुशौ। अधःस्थितयोश्चापबाणाः। पाशो वैद्रुमः, अंकुशो रूप्यमयः। एते च क्रमेण रागरोषमनस्तन्मात्रात्मकवासनारूपा इति च ज्ञेयम्)

३ श्रीमन्माणिक्यपादुके, ३ स्वसमानवयस्काभिरावरणदेवताभिस्सह महाचक्राधिरोहणम्, ३ कामेश्वराङ्कपर्यङ्कोपवेशनम्, (अत्रेतरासां स्वस्वस्थानावस्थितिभावनामात्रम्), ३ अमृतासवचषकम्, ३ आचमनीयम्, ३ कर्पूरवीटिकाम् कल्पयामि नमः। तल्लक्षणन्तु--

**एलालवङ्गकर्पूरकस्तूरीकेसरादिभिः।**
**जातीफलदलैः पूगैः लाङ्गल्यूषणनागरैः॥**
**चूर्णैःखादिरसारैश्च युक्ता कर्पूरवीटिका॥**

३ ललितायै आनन्दोल्लासविलासहासम् मङ्गलार्तिकं कल्पयामि नमः। तत्प्रकारस्तु---

कलधौतादिभाजने कुङ्कुमचन्दनादिलिखितस्याष्टषट्चतुर्दलाद्यन्यतमस्य कमलस्य चन्द्राकारचरुगोलकवत्यां चणकमुद्गजुषि वा कर्णिकायां दलेषु च पयःशर्करापिण्डीकृतयवगोधूमादिपिष्टोपादानकानि त्रिकोणशिरस्कडमर्वाकृतीनि चतुरङ्गुलोत्सेधानि घृतपाचितानि नव सप्तपञ्चान्यतमसंख्यानि दीपपात्राणि निधाय तेषु गोघृतं प्रत्येकं कर्षप्रमितमापूर्य कर्पूरगर्भितां वर्तिकां हृल्लेखया प्रज्जवाल्य ऐं ह्रीं श्रीं श्रीं ह्रीं ग्लूं स्लूं म्लूं प्लूं न्लूं ह्रीं श्रीं इति नवाक्षर्या नवरत्नेश्वरीविद्यया अभिमन्त्र्य चक्रमुद्रां प्रदर्श्य मूलेनाभ्यर्च्य '४ जगद्ध्वनिमन्त्रमातः स्वाहा' इति मन्त्रपूर्वकं गन्धाक्षतादिना घण्टां सम्पूज्य तां वादयन् जानुचुम्बितभूतलस्तत्पात्रमामस्तकमुद्धृत्य ३ ललितायै आरार्तिकं कल्पयामि नम इति कल्पयित्वा,

**समस्तचक्रचक्रेशीयुते देवि नवात्मिके।**
**आरार्तिकमिदं तुभ्यं गृहाण मम सिद्धये॥**

इति नववारं श्रीदेव्या आचूडमाचरणाब्जं परिभ्राम्य दक्षभागे स्थापयेत्।

३ छत्रम्, ३ चामरम्, ३ तालवृन्तम्, ३ गन्धम्, ३ पुष्पम् कल्पयामि नमः। (विविधानि पुष्पाणि समर्पयेत्)

अथ धूपपात्रेऽङ्गारान् पूरयित्वा दशाङ्गादि निक्षिप्य—३ ललितायै धूपं कल्पयामि नमः इति देवीचरणान्तिके समर्प्य तत्पात्रं श्रीदेव्या वामभागे निदध्यात् । दशाङ्गानि तु—

**श्वेतकृष्णागरूलाक्षागुग्गुलुश्चन्दनं घृतम् ।**
**मधु बिल्वफलं रालः कर्पूरश्च दशाङ्गकम् ।।**

ततो दीपभाजनेऽर्पितं गोघृततैलाक्तं कर्पूरगर्भितं त्र्यादिविषमसंख्याकं वर्तिजातं प्रज्जवाल्य ४ललितायै दीपं कल्पयामि नम इति देव्या दृक्समसीमनि प्रदर्श्य तत्पात्रं दक्षिणभागे निवेश्य, देव्यग्रतः स्वदक्षिणेऽधिचतुरस्रमण्डलमाधारोपरि निहितकनकरौप्यादिभाजनभरितं फलविशेषखण्डसितलड्डुकादि नैवेद्यं मूलेन प्रोक्ष्य वं इति धेनुमुद्रयाऽमृतीकृत्य मूलेन त्रिवारमभिमन्त्र्य ३ ललितायै नैवेद्यं कल्पयामि नमः इति निवेदयेत् ।

गन्धादिनैवेद्यान्तमुपचारपञ्चकन्तु पृथिव्यादिमहाभूतपञ्चकरूपं क्रमेण भावयेत्, सर्वभूतात्मकत्वञ्च कर्पूरवीटिकायाः ।

अथ पानीयोत्तरापोशनहस्तप्रक्षालनगण्डूषाचमनकर्पूरवीटिकाश्चोपचारमन्त्रैः कल्पयित्वा—ऐं ह्रीं श्रीं द्रां द्रीं क्लीं ब्लूं सः क्रों ह्स्ख्फ्रें ह्सौः ऐं सर्वसंक्षोभिण्यादिनवमुद्राः प्रदर्श्य, षोडश्युपासनायान्तु ऐं इति त्रिखण्डामपि प्रदर्शयेत् ।

ततो ४ मूलान्ते ललिताश्रीपादुकां पूजयामि इति तत्त्वमुद्रासन्दष्टद्वितीयशकलगृहीतविशेषार्घ्यबिन्दुसहार्पितैः दक्षकरोपात्तज्ञानमुद्राधृतकुसुमाक्षतैः श्रीदेवीं त्रिस्सन्तर्पयेत् । अनेनैव प्रकारेण सर्वासामावरणदेवतानां तर्पणं ज्ञेयम् ।

इति देवीपूजनम्

## चतुरायतनपूजा (गणेशपूजा)

**बीजापूरगदेक्षुकार्मुकरुजाचक्राब्जपाशोत्पल-**
**व्रीह्यग्रस्वविषाणरत्नकलशप्रोद्यत्कराम्भोरुहः ।**
**ध्येयो वल्लभया सपद्मकरयाऽऽश्लिष्टोज्ज्वलद्भूषया**
**विश्वोत्पत्तिविपत्तिसंस्थितिकरो विघ्नेश इष्टार्थदः ।।**

ऐं ह्रीं श्रीं गणपतिमूलं श्रीमहागणपतिं ध्यायामि, ३ श्रीमहागणपतिमावाहयामि, ३ श्रीमहागणपतये नमः आसनं समर्पयामि, ३ पाद्यम्, ३ अर्घ्यम्, ३ आचमनीयम्, ३ मधुपर्कस्नानम्, ३ आचमनीयम्, ३ वस्त्रालङ्कारान्, ३ यज्ञोपवीतम्, ३ गन्धम्, ३ पुष्पाक्षतान् समर्पयामि । ऐं ह्रीं श्रीं सुमुखाय नमः, ३ एकदन्ताय नमः, ३ कपिलाय नमः, ३ गजकर्णाय नमः, ३ लम्बोदराय नमः, ३ विकटाय नमः, ३ विघ्नराजाय नमः, ३ गणाधिपाय नमः, ३ धूमकेतवे नमः ३ गणाध्यक्षाय नमः, ३ फालचन्द्राय नमः, ३ गजाननाय नमः, ३ वक्रतुण्डाय नमः, ३ शूर्पकर्णाय नमः, ३ हेरम्बाय नमः, ३ स्कन्दपूर्वजाय नमः, ३ गणपतिमूलं श्रीगणपतिपादुकां पूजयामि तर्पयामि नमः इति त्रिः सन्तर्प्य, धूप-दीप-नैवेद्य-ताम्बूलादीन् समर्पयामि । नीराजनं समर्पयामि ।

'ओं तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि । तन्नो दन्तिःप्रचोदयात्' इति मन्त्रपुष्पाञ्जलिं समर्प्य प्रदक्षिणनमस्कारान् समस्तराजोपचारान् देवोपचारांश्च समर्प्य––अनया पूजया भगवान्सर्वदेवात्मकः श्रीमहागणपतिः सुप्रीतः सुप्रसन्नो वरदो भवतु इति जलमिश्रितान् पुष्पाक्षतान् भूमावुत्सृजेत् ।

## सूर्यपूजा––

**अध्यारूढं रथेन्द्रे वसुदलसहिते वृत्तषट्कोणमध्ये**
**भास्वन्तं भास्करं तं शुभदमसिगदाशङ्खचक्राब्जयुग्मम् ।**
**वेदाकारं त्रिमूर्तिं त्रिविधनयगुणं विश्वरूपं पुराणं**
**ह्रां ह्रीं ह्रूंकाररूपं सुरनुतमनिशं भावयेद्धृत्सरोजे ॥**

ध्यानासनपाद्यार्घ्यादिकं पूर्ववत्कुर्यात् । ३ मित्राय नमः, ३ रवये नमः, ३ सूर्याय नमः, ३ भानवे नमः, ३ खगाय नमः, ३ पूष्णे नमः, ३ हिरण्यगर्भाय नमः, ३ मरीचये नमः, ३ आदित्याय नमः, ३ सवित्रे नमः, ३ अर्काय नमः, ३ भास्कराय नमः, ३ आदित्यमूलम् आदित्यश्रीपादुकां पूजयामि तर्पयामि नमः । पूर्ववद्धूपदीपनैवेद्यताम्बूलादीन् समर्पयेत् ।

'ओं भास्कराय विद्महे महाद्युतिकराय धीमहि, तन्नो आदित्
प्रचोदयात्' इति मन्त्रपुष्पाञ्जलिं समर्प्य—अनया पूजया भगवा
न्सर्वदेवात्मकः आदित्यस्सुप्रीतस्सुप्रसन्नो वरदो भवत्विति समर्पयेत्।

## विष्णुपूजा—

**शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं**
**विश्वाधारं गगनसदृशं मेघवर्णं शुभाङ्गम् ।**
**लक्ष्मीकान्तं कमलनयनं योगिभिर्ध्यानगम्यं**
**वन्दे विष्णुं भवभयहरं सर्वलोकैकनाथम् ॥**

ध्यानादिकं पूर्ववत्कुर्यात् । ३ केशवाय नमः, ३ नारायणाय नम
३ माधवाय नमः, ३ गोविन्दाय नमः, ३ विष्णवे नमः, ३ मधुसूदना
नमः, ३ त्रिविक्रमाय नमः, ३ वामनाय नमः, ३ श्रीधराय न
३ हृषीकेशाय नमः, ३ पद्मनाभाय नमः, ३ दामोदराय नमः,
अष्टाक्षरी महाविष्णुश्रीपादुकां पूजयामि तर्पयामि नमः इति सन्त
धूपदीपादिकं पूर्ववत्कुर्यात् ।

'ओं नारायणाय विद्महे वासुदेवाय धीमहि, तन्नो विष्णुः प्रचो
दयात्' इति पुष्पाञ्जलिं दत्वा अनया पूजया भगवान्सर्वात्मकः श्री
विष्णुस्सुप्रीतः सुप्रसन्नो वरदो भवत्विति सन्तर्पयेत् ।

## शिवपूजा—

**मूले कल्पद्रुमस्य द्रुतकनकनिभं चारुपद्मासनस्थं**
**वामाङ्कारूढगौरीनिबिडकुचभराभोगगाढोपगूढम् ।**
**सर्वालङ्कारकान्तं वरपरशुमृगाभीतिहस्तं त्रिणेत्रं**
**वन्दे बालेन्दुमौलिं गजवदनगुहाश्लिष्टपार्श्वं महेशम् ॥**

ध्यानादिकं पूर्ववत्कुर्यात् ।

३ भवाय देवाय नमः, ३ शर्वाय देवाय नमः, ३ ईशानाय देवाय नम
३ पशुपतये देवाय नमः, ३ रुद्राय देवाय नमः, ३ उग्राय देवाय नम
३ भीमाय देवाय नमः, ३ महते देवाय नमः, ३ पञ्चाक्षरी साम्ब
परमेश्वर श्रीपादुकां पूजयामि तर्पयामि नमः ।

'ओं तत्पुरुषाय विद्महे महादेवाय धीमहि, तन्नो रुद्रः प्रचोदयात्'
इति पुष्पाञ्जलिं दत्वा अनया पूजया भगवान् सर्वदेवात्मकः साम्ब-
परमेश्वरः सुप्रीतः सुप्रसन्नो वरदो भवतु ।

**अभीष्टसिद्धिं मे देहि शरणागतवत्सल ।**
**भक्त्या समर्पये तुभ्यं चतुरायतनार्चनम् ॥**

इति सामान्यार्घ्योदकेन देव्या वामहस्ते पूजां समर्पयेत् ।

षोडश्युपासनायां षोडशीकूटषट्केन षडङ्गपूजा सर्वत्र । तथाहि—

ओं ऐं ह्रीं श्रीं श्रीं ह्रीं क्लीं ऐं सौः हृदयाय नमः हृदयशक्ति
श्रीपादुकां पूजयामि तर्पयामि नमः ।

४ ओं ह्रीं श्रीं शिरसे स्वाहा शिरश्शक्तिश्रीपादुकां पू० त० नमः ।

४ क ए ई ल ह्रीं शिखायै वषट् शिखाशक्तिश्रीपादुकां पू० त० नमः ।

४ हसकहल ह्रीं कवचाय हुं कवचशक्तिश्रीपादुकां पू० त० नमः ।

४ सकल ह्रीं नेत्रत्रयाय वौषट् नेत्रशक्तिश्रीपादुकां पू० त० नमः ।

४ सौः ऐं क्लीं ह्रीं श्रीं अस्त्राय फट् अस्त्रशक्तिश्रीपादुकां पू० त०
नमः ।

## नित्यादेवीयजनम्

ततो मध्यत्रिकोणस्य दक्षिणरेखायां वारुण्याद्याग्नेयान्तं क्रमेण—
अं आं इं ईं उं इति पूर्वरेखायाम्, आग्नेयादीशानान्तं ऊं ऋं ॠं लृं लॄं
इति, उत्तररेखायाम्, ईशान्यादिवारुण्यन्तं एं ऐं ओं औं अं इति,
पञ्चपञ्चस्वरान् विभाव्य तेषु वामावर्तेनैव प्रागुक्तस्वरूपाः कामे-
श्वर्यादिनित्या यजेत् । बिन्दौ च षोडशं स्वरं अः इति विचिन्त्य महा-
नित्याम् । यथा :—

ऐं ह्रीं श्रीं अं ऐं स क ल ह्रीं नित्यक्लिन्ने मदद्रवे सौः अं कामेश्वरी-
नित्याश्रीपादुकां पूजयामि तर्पयामि नमः ।

३ आं ऐं भगभुगे भगिनि भगोदरि भगमाले भगावहे ।
भगगुह्य भगयोनि भगनिपातिनि सर्वभगवशंकरि भगरूपे नित्य
क्लिन्ने भगस्वरूपे सर्वाणि भगानि मे ह्यानय वरदे रेते सुरते भग-
क्लिन्ने क्लिन्नद्रवे क्लेदय द्रावय अमोघे भगविच्चे क्षुभ क्षोभय सर्वस-

त्वान् भगेश्वरि ऐं ब्लूं जें ब्लूं में ब्लूं भों ब्लूं हें ब्लूं हें क्लिन्ने सर्वाणि भगानि मे वशमानय स्त्रीं हर ब्लें ह्रीं श्रां भगमालिनीनित्याश्रीपादुकां पूजयामि तर्पयामि नमः ।

३ इं श्रों ह्रीं नित्यक्लिन्ने मदद्रवे स्वाहा इं नित्यक्लिन्नानित्याश्रीपादुकां पूजयामि तर्पयामि नमः ।

३ ईं श्रों क्रों भ्रों क्रौं झ्रौं छ्रौं ज्रौं स्वाहा ईं भेरुण्डानित्याश्रीपादुकां पूजयामि तर्पयामि नमः ।

३ उं श्रों ह्रीं वह्निवासिन्यै नमः उं वह्निवासिनीनित्याश्रीपादुकां पूजयामि तर्पयामि नमः ।

३ ऊं ह्रीं क्लिन्ने ऐं क्रों नित्यमदद्रवे ह्रीं ऊं महावज्रेश्वरीनित्याश्रीपादुकां पूजयामि तर्पयामि नमः ।

३ ऋं ह्रीं शिवदूत्यै नमः ऋं शिवदूतीनित्याश्रीपादुकां पूजयामि तर्पयामि नमः ।

३ ॠं श्रों ह्रीं हुं खे च छे क्षः स्त्रीं हुं क्षें ह्रीं फट् ॠं त्वरितानित्याश्रीपादुकां पूजयामि तर्पयामि नमः

३ ऌं ऐं क्लीं सौः ऌं कुलसुन्दरीनित्याश्रीपादुकां पूजयामि तर्पयामि नमः ।

३ ॡं ह्स्क्लरडें ह्स्क्लरडीं ह्स्क्लरडौः ॡं नित्यानित्याश्रीपादुकां पूजयामि तर्पयामि नमः ।

३ एं ह्रीं फ्रें स्रूं क्रों श्रां क्लीं ऐं ब्लूं नित्यमदद्रवे हुं फ्रं ह्रीं एं नीलपताकानित्याश्रीपादुकां पूजयामि तर्पयामि नमः ।

३ ऐं भ्म्र्यूं ऐं विजयानित्याश्रीपादुकां पूजयामि तर्पयामि नमः ।

३ श्रों स्वौं श्रों सर्वमङ्गलानित्याश्रीपादुकां पूजयामि तर्पयामि नमः ।

३ श्रौं श्रों नमो भगवति ज्वालामालिनि देवदेवि सर्वभूतसंहारकारिके जातवेदसि ज्वलन्ति ज्वल ज्वल प्रज्वल प्रज्वल ह्रां ह्रीं ह्रूं र र र र र र र हुं फट् स्वाहा श्रौं ज्वालमालिनीनित्याश्रीपादुकां पूजयामि तर्पयामि नमः ।

३ अं च्कौं अं चित्रानित्याश्रीपादुकां पूजयामि तर्पयामि नमः ।

३ अः पञ्चदशी अः ललितामहानित्याश्रीपादुकां पूजयामि तर्पयामि नमः ।।

## गुरुमण्डलार्चनम्

३ परौघेभ्यो नमः इति विन्दुत्रिकोणयोः पुष्पाञ्जलिं दत्वा विन्दौ महापादुकां यजेत् ।। यथा--

३ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं ग्लौं ह्‌स्ख्फ्रें ह स क्ष म ल व र यूं ह्‌सौः स ह क्ष म ल व र यीं स्हौः श्रीविद्यानन्दनाथात्मकचर्यानन्दनाथ श्रीमहापादुकां पूजयामि तर्पयामि नमः ।।

त्रिकोणे वामरेखायाम्--

३ उड्डीशानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः

३ प्रकाशानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः

३ विमर्शानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः

३ आनन्दानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः

पूर्व रेखायाम्--

३ षष्ठीशानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः

३ ज्ञानानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः

३ सत्यानन्दनाथ श्रीपादुकां पूजयामि नमः

३ पूर्णानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः

दक्षरेखायाम्--

३ मित्रेशानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः

३ स्वभावानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः

३ प्रतिभानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः

३ सुभगानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः

ततो देव्याः पश्चात् मूलत्रिकोणपूर्वरेखायाः तदव्यवहितप्रागग्रत्रिकोणपश्चिमरेखायाश्चान्तरे विमलाजयिन्योर्मध्ये अरुणावाग्देवतासन्निधौ दक्षिणोत्तरायतं रेखात्रयं विभाव्यदक्षिणसंस्थाक्रमेण दिव्यसिद्धमानवाख्यमोघत्रयं मुनिवेदवसुसङ्ख्यं समर्चयेत् । यथा--

## दिव्यौघः

ऐं ह्रीं श्रीं परप्रकाशानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ परशिवानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ पराशक्त्यम्बा श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ कौलेश्वरानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ शुक्लदेव्यम्बा श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ कुलेश्वरानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ कामेश्वर्यम्बा श्रीपादुकां पूजयामि तर्पयामि नमः ।

## सिद्धौघः

ऐं ह्रीं श्रीं भोगानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।।
३ क्लिन्नानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ समयानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ सहजानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।

## मानवौघः

ऐं ह्रीं श्रीं गगनानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ विश्वानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ विमलानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ भुवनानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ लीलानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ स्वात्मानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ प्रियानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।

एतत् कादिविद्योपासकानां दक्षिणामूर्तिसम्प्रदायानुसारि गुरुपारम्पर्यम् । इदमेव षोडश्यामपीति ज्ञानार्णवमतम् । अस्मादेव ज्ञापकादयमेव पूजनक्रमः तत्राप्युपयुज्यते ।

श्रीविद्यार्णवनिबन्धे तु श्रीषोडशीगुरुपारम्पर्ये विशेषः । यथा––

## दिव्यौघः

ऐं ह्लीं श्रीं व्योमातीताम्बा श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ व्योमेश्यम्बा श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ व्योमगाम्बा श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ व्योमचारिण्यम्बा श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ व्योमस्थाम्बा श्रीपादुकां पूजयामि तर्पयामि नमः ॥

## सिद्धौघः

ऐं ह्लीं श्रीं उन्मनाकाशानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ समनाकाशानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ व्यापकाकाशानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ शक्त्याकाशानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ ध्वन्याकाशानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ॥
३ ध्वनिमात्राकाशानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ अनाहताकाशानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ बिन्द्वाकाशानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ इन्द्वाकाशानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ॥

## मानवौघः

ऐं ह्लीं श्रीं परमात्मानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ शाम्भवानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ चिन्मुद्रानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ वाग्भवानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ लीलानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ सम्भ्रमानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ चिदानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ प्रसन्नानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ विश्वानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ॥

हादिपञ्चदश्युपासकानां गुरुक्रमे यथा—

### दिव्यौघः

ऐं ह्लीं श्रीं परमशिवानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ कामेश्वर्यम्बानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ दिव्यौघानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ महौघानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ सर्वानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ प्रज्ञादेव्यम्बानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ प्रकाशानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ॥

### सिद्धौघः

ऐं ह्लीं श्रीं दिव्यानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ चिदानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ कैवल्यानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ अनुदेव्यम्बानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ महोदयानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ सिद्धानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।

### मानवौघः

ऐं ह्लीं श्रीं चिदानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ विश्वानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ रामानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ कमलानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ परानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ मनोहरानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ स्वात्मानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ प्रतिमानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।

### मन्वादिविद्यानां गुरुपरम्परा

अथ सूत्रकृतानुक्तानामपि श्रीविद्यात्मनोपलक्षितानां मन्वादिविद्यानां गुरुपारम्पर्यं यथा—

## दिव्यौघः

ऐं ह्लीं श्रीं परप्रकाशानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ परविमर्शानिन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ कामेश्वर्यम्बानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ मोक्षानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ अमृतानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ सिद्धानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ पुरुषानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ अघोरानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।

## सिद्धौघः

ऐं ह्लीं श्रीं प्रकाशानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ सदानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ सिद्धौघानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ उत्तमानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।

## मानवौघः

ऐं ह्लीं श्रीं उत्तरानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ परमानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ सर्वज्ञानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ सर्वानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ शिद्धानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ गोविन्दानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ शङ्करानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।

कल्पसूत्रस्य कालीमतान्तर्गतत्वादिदं पारम्पर्यत्रयं तदनुगमेव ।

श्रीविद्यार्णवोक्तश्रीषोडशाक्षरीगुरुपादुकापारम्पर्यस्य कादिकाल्युभयमतसम्मतत्वं ज्ञेयम् ।

अथ प्रासङ्गिकः अज्ञातगुरुपारम्पर्याणां गुरुक्रमो यथा—

### दिव्यौघः

ऐं ह्लीं श्रीं ऐं गुरुभ्यो नमः ।

३ ऐं गुरुपादुकाभ्यो नमः ।।

### सिद्धौघः

ऐं ह्लीं श्रीं ऐं परमगुरुभ्यो नमः ।

३ ऐं परमगुरुपादुकाभ्यो नमः ।

### मानवौघः

ऐं ह्लीं श्रीं ऐं आचार्येभ्यो नमः ।

३ ऐं आचार्यपादुकाभ्यो नमः ।

३ ऐं पूर्वसिद्धेभ्यो नमः ।

३ ऐं पूर्वसिद्धपादुकाभ्यो नमः ।

एवं स्वस्योपास्यविद्यौघत्रयसपर्यां विधाय स्वशिरसि पूर्वोक्तरूपं श्रीगुरुं ध्यात्वा, पूर्वोक्तेन श्रीगुरुपादुकामन्त्रेण श्रीगुरुं त्रिर्यजेत् ।।

इति गुरुमण्डलार्चनम् । एतावल्लयाङ्गपूजनमित्युच्यते।।

## आवरणपूजा

### प्रथमावरणम्

एतद्देवतास्वरूपं तु प्रागुक्तमेव । क्रमेण शुक्लारुणपीतवर्णरेखा-त्रयस्य लकारप्रकृतिकपृथिव्यात्मकस्य चतुरस्रस्य प्रवेशरीत्या प्रथम-रेखायां पश्चिमादिद्वारचतुष्टयदक्षिणभागेषु वाय्वादिकोणेषु च पश्चिमनैर्ऋतयोः पूर्वेशानयोश्च मध्ये क्रमेण––

ऐं ह्लीं श्रीं अणिमासिद्धिश्रीपादुकां पूजयामि तर्पयामि नमः, लघिमा, महिमा, ईशित्व, वशित्व, प्राकाम्य, मुक्ति, इच्छा, प्राप्ति, सर्वकामसिद्धिश्रीपादुकां पूजयामि तर्पयामि नमः ।

इति स्वस्य तत्तदाभिमुख्यं भावयन् पूजयेत् । एवमुत्तरत्रापि । अथ देव्याः पुरतः पश्चिमादिदिक् । पश्चिमनैर्ऋतयोर्मध्ये अधोदिक् । पूर्वेशानयोर्मध्ये चोर्ध्वदिक् इति विवेकः ।

अथ चतुरस्रमध्यरेखायां प्रागुक्तद्वारवामभागेषु कोणेषु च क्रमेण—

ऐं ह्रीं श्रीं ब्राह्मीमातृदेवीश्रीपादुकां पूजयामि तर्पयामि नमः, माहेश्वरी, कौमारी, वैष्णवी, वाराही, माहेन्द्री, चामुण्डा, महालक्ष्मी– मातृदेवीश्रीपादुकां पूजयामि तर्पयामि नमः ।

ततः चतुरस्रान्त्यरेखायां प्रथमरेखोक्तक्रमेण—

ऐं ह्रीं श्रीं सर्वसङ्क्षोभिणीमुद्राशक्तिश्रीपादुकां पूजयामि तर्पयामि नमः, सर्वविद्राविणी, सर्वाकर्षिणी, सर्ववशङ्करी, सर्वोन्मादिनी, सर्वमहाङ्कुशा, सर्वखेचरी, सर्वबीज, सर्वयोनि, सर्वत्रिखण्ड- मुद्राशक्तिश्रीपादुकां पूजयामि तर्पयामि नमः । इति पूजयित्वा,

एताः प्रकटयोगिन्यः त्रैलोक्यमोहने चक्रे समुद्राः ससिद्धयः सायुधाः सशक्तयः सवाहनाः सपरिवाराः सर्वोपचारैः सम्पूजिताः सन्तर्पिताः सन्त्विति तस्यामेव समष्टयर्चनं पुष्पाञ्जलिना कृत्वा अणिमासिद्धेः पुरतो ३ अं आं सौः त्रिपुराचक्रेश्वरीश्रीपादुकां पूजयामि तर्पयामि नमः इति सम्पूज्य, द्रां इति सर्वसङ्क्षोभिणीमुद्रां प्रदर्शयेत् ।

**अभीष्टसिद्धिं मे देवि शरणागतवत्सले ।**
**भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम् ॥**

इति प्रथमावरणम्

## द्वितीयावरणम्

श्वेतवर्णे सकारप्रकृतिकषोडशकलात्मके चन्द्रस्वरूपे स्रवदमृतरसे षोडशदलकमले देव्यग्रदलमारभ्य वामावर्तेन (अप्रादक्षिण्येन)

ऐं ह्रीं श्रीं कामाकर्षिणीनित्याकलादेवीश्रीपादुकां पूजयामि तर्पयामि नमः, बुद्ध्याकर्षिणी, अहंकाराकर्षिणी, शब्दाकर्षिणी, स्पर्शाकर्षिणी, रूपाकर्षिणी, रसाकर्षिणी, गन्धाकर्षिणी, चित्ताकर्षिणी, धैर्याकर्षिणी, स्मृत्याकर्षिणी, नामाकर्षिणी, आत्माकर्षिणी, अमृताकर्षिणी, शरीराकर्षिणीनित्याकलादेवीश्रीपादुकां पूजयामि तर्पयामि नमः ।

इत्यभ्यर्च्य, एताः गुप्तयोगिन्यः सर्वाशापरिपूरके चक्रे समुद्राः सायुधाः सशक्तयः सवाहनाः सपरिवाराः सर्वोपचारैः सम्पूजिताः सन्त्विति तासामेव समष्टचर्चनं विधाय कामाकर्षिण्याः पुरतो ३ ऐं क्लीं सौः त्रिपूरेशीचक्रेश्वरीश्रीपादुकां पूजयामि तर्पयामि नमः इत्यवमृश्य, द्रीं इति सर्वविद्राविणीमुद्रां प्रदर्शयेत् ।

**अभीष्टसिद्धिं मे देहि शरणागतवत्सले ।**
**भक्त्या समर्पये तुभ्यं द्वितीयावरणार्चनम् ।।**

इति द्वितीयावरणम्

## तृतीयावरणम्

हकारप्रकृतिकाष्टमूर्त्यात्मकशिवाभिन्ने जपाकुसुममित्रे अष्टपुत्रे श्रीदेव्याः पृष्ठदलमारभ्य पूर्वादिदिक्षु आग्नेयादिविदिक्षु च क्रमात्—

ऐं ह्लीं श्रीं अनङ्गकुसुमादेवीश्रीपादुकां पूजयामि तर्पयामि नमः, अनङ्गमेखला, अनङ्गमदना, अनङ्गमदनातुरा, अनङ्गरेखादेवी, अनङ्गवेगिनी, अनङ्गांकुशा, अनङ्गमालिनीदेवीश्रीपादुकां पूजयामि तर्पयामि नमः ।

एताः गुप्ततरयोगिन्यः सर्वसङ्क्षोभणचक्रे समुद्राः ससिद्धयः सायुधाः सशक्तयः सवाहनाः सपरिवाराः सर्वोपचारैः सम्पूजिताः सन्तर्पिताः सन्त्विति तासामेव समष्टचर्चनं विधाय अनङ्गकुसुमाया अग्रे ऐं ह्लीं श्रीं क्लीं सौः त्रिपुरसुन्दरीचक्रेश्वरीश्रीपादुकां पूजयामि तर्पयामि नमः इति संविभाव्य, क्लीं इति सर्वाकर्षिणीमुद्रां उन्मुद्रयेत् ।

**अभीष्टसिद्धिं मे देहि शरणागतवत्सले ।**
**भक्त्या समर्पये तुभ्यं तृतीयावरणार्चनम् ।।**

इति तृतीयावरणम्

## चतुर्थावरणम्

ईकारप्रकृतिकचतुर्दशभुवनात्मकमहामायारूपे दाडिमीप्रसूनसहोदरे चतुर्दशारे देव्यग्रकोणमारभ्य वामावर्तेन—

ऐं ह्लीं श्रीं सर्वसङ्क्षोभिणीश्रीपादुकां पूजयामि तर्पयामि नमः, सर्वविद्राविणी, सर्वाकर्षिणी, सर्वाह्लादिनी, सर्वसम्मोहिनी, सर्वस्तम्भिनी, सर्वजृम्भिणी, सर्ववशङ्करी, सर्वरञ्जिनी, सर्वोन्मादिनी, सर्वार्थसाधिनी सर्वसम्पत्तिपूरणी, सर्वमन्त्रमयी, सर्वद्वन्द्वक्षयङ्करी-श्रीपादुकां पूजयामि तर्पयामि नमः ।

एताः सम्प्रदाययोगिन्यः सर्वसौभाग्यदायके चक्रे समुद्राः ससिद्धयः सायुधाः सशक्तयः सवाहनाः सपरिवाराः सर्वोपचारैः सम्पूजिताः सन्तर्पिताः सन्त्विति तासामेव समष्टयर्चनं विधाय, सर्वसङ्क्षोभिण्याः पुरतः ऐं ह्लीं श्रीं हैं ह्क्लीं ह्सौः त्रिपुरवासिनीचक्रेश्वरीश्रीपादुकां पूजयामि तर्पयामि नमः इति विभाव्य ब्लूं इति सर्ववशङ्करीमुद्रां समुन्मीलयेत् ।

**अभीष्टसिद्धिं मे देहि शरणागतवत्सले ।**
**भक्त्या समर्पये तुभ्यं चतुर्थावरणार्चनम् ॥**

इति चतुर्थावरणम्

## पञ्चमावरणम्

एकारप्रकृतिकदशावतारात्मकविष्णुस्वरूपे प्रभापराभूतसिन्दूरे बहिर्दशारे देव्यग्रकोणाद्यप्रादक्षिण्येन––

ऐं ह्लीं श्रीं सर्वसिद्धिप्रदाश्रीपादुकां पूजयामि तर्पयामि नमः, सर्वसम्पत्प्रदा, सर्वप्रियङ्करी, सर्वमङ्गलकारिणी, सर्वकामप्रदा, सर्वदुःखविमोचनी, सर्वमृत्युप्रशमनी, सर्वविघ्ननिवारिणी, सर्वाङ्गसुन्दरी, सर्वसौभाग्यदायिनी श्रीपादुकां पूजयामि तर्पयामि नमः ।

एताः कुलोत्तीर्णयोगिन्यः सर्वार्थसाधके चक्रे समुद्राः ससिद्धयः सायुधाः सशक्तयः सवाहनाः सपरिवाराः सर्वोपचारैः सम्पूजिताः सन्तर्पिताः सन्त्विति तासामेव समष्टयर्चनं विधाय सर्वसिद्धिप्रदाया अग्रे ऐं ह्लीं श्रीं ह्सैं ह्स्क्लीं ह्स्सौः त्रिपुराश्रीचक्रेश्वरीश्रीपादुकां पूजयामि तर्पयामि नमः इति समभ्यर्च्य, सः इति उन्मादिनीमुद्रां उद्घाटयेत् ।

**अभीष्टसिद्धिं मे देहि शरणागतवत्सले ।**
**भक्त्या समर्पये तुभ्यं पञ्चमावरणार्चनम् ।।**

इति पञ्चमावरणम्

## षष्ठावरणम्

रेफप्रकृतिकदशकलात्मकवैश्वानराभिन्ने जपासुमनस्सहचरे अन्तर्दशारे देव्यग्रकोणमारभ्य वामावर्तेन—

ऐं ह्रीं श्रीं सर्वज्ञश्रीपादुकां पूजयामि तर्पयामि नमः, सर्वशक्ति, सर्वैश्वर्यप्रदा, सर्वज्ञानमयी, सर्वव्याधिविनाशिनी, सर्वाधारस्वरूपा, सर्वपापहरा, सर्वानन्दमयी, सर्वरक्षास्वरूपिणी, सर्वेप्सितफलप्रदाश्रीपादुकां पूजयामि तर्पयामि नमः ।

एताः निगर्भयोगिन्यः सर्वरक्षाकरे चक्रे समुद्राः ससिद्धयः सायुधाः सशक्तयः सवाहनाः सपरिवाराः सर्वोपचारैः सम्पूजिताः सन्तर्पिताः सन्त्विति तासामेव समष्टयर्चनं विधाय, सर्वज्ञायाः पुरतः ऐं ह्रीं श्रीं क्लीं ब्लें त्रिपुरमालिनीचक्रेश्वरीश्रीपादुकां पूजयामि तर्पयामि नमः, इत्यर्च्चयित्वा क्रीं इति सर्वमहाङ्कुशमुद्रामङ्कुरयेत् ।।

**अभीष्टसिद्धिं मे देहि शरणागतवत्सले ।**
**भक्त्या समर्पये तुभ्यं षष्ठमावरणार्चनम् ।।**

इति षष्ठावरणम्

## सप्तमावरणम्

ककारप्रकृतिकाष्टमूर्त्यात्मककामेश्वरस्वरूपे पद्मरागरुचिरे अष्टारे देव्यग्रकोणाद्यप्रादक्षिण्येन—

ऐं ह्रीं श्रीं अं आं इं ईं उं ऊं ऋं ॠं लृं ॡं एं ऐं ओं औं अं अः ब्लूं वशिनीवाग्देवताश्रीपादुकां पूजयामि तर्पयामि नमः,

३ कं खं गं घं ङं क्लह्रीं कामेश्वरी, ३ चं छं जं झं ञं न्व्लीं मोदिनी, ३ टं ठं डं ढं णं टलूं विमला, ३ तं थं दं धं नं ज्म्रीं अरुणा, ३ पं फं बं भं मं ह्स्लव्लूं जायिनी, ३ यं रं लं वं झ्म्यूं सर्वेश्वरी, ३ शं षं सं हं लं क्षं क्ष्म्रीं कौलिनीवाग्देवताश्रीपादुकां पूजयामि तर्पयामि नमः ।

एताः रहस्ययोगिन्यः सर्वरोगहरे चक्रे समुद्रा इत्यादि कथित चरम्। वशिन्याः पुरतः ऐं ह्रीं श्रीं ह्रीं श्रीं सौः त्रिपुरासिद्धाचक्रेश्वरीश्रीपादुकां पूजयामि तर्पयामि नमः इति सम्पूज्य ह्स्ख्फ्रें इति खेचरीमुद्रां उररीकुर्यात्।

अभीष्टसिद्धिं मे देहि शरणागतवत्सले।
भक्त्या समर्पये तुभ्यं सप्तमावरणार्चनम्॥

इति सप्तमावरणम्

## अष्टमावरणम्

महात्र्यस्रबाह्यतः पश्चिमादिदिक्षु प्रादक्षिण्येन---

३ यां रां लां वां सां द्रां द्रीं क्लीं ब्लूं सः सर्वजम्भनेभ्यो कामेश्वरी कामेश्वरबाणेभ्यो नमः बाणशक्तिश्रीपादुकां पूजयामि तर्पयामि नमः।

३ थं धं सर्वसंमोहनाभ्यां कामेश्वरीकामेश्वरधनुर्भ्यां नमः धनुः शक्तिश्रीपादुकां पूजयामि तर्पयामि नमः।

३ ह्रीं ग्रां सर्ववशीकरणाभ्यां कामेश्वरीकामेश्वरपाशाभ्यां नमः पाशशक्तिश्रीपादुकां पूजयामि तर्पयामि नमः।

३ क्रों क्रों सर्वस्तम्भनाभ्यां कामेश्वरीकामेश्वराङ्कुशाभ्यां नमः अङ्कुशशक्तिश्रीपादुकां पूजयामि तर्पयामि नमः।

इत्यायुधार्चनं विधाय नादप्रकृतिकगुणत्रयप्रधानत्रिशक्तिरूपरेखात्र्यात्मके बन्धूकपुष्पबन्धुकिरणे त्रिकोणे अग्रदक्षवामकोणेषु बिन्दौ च क्रमेण---

ऐं ह्रीं श्रीं मूलप्रथमखण्डं कामेश्वर्यम्बाश्रीपादुकां पूजयामि तर्पयामि नमः।

३ मूलद्वितीयखण्डं वज्रेश्वर्यम्बाश्रीपादुकां पूजयामि तर्पयामि नमः।

३ मूलतृतीयखण्डं भगमालिन्यम्बाश्रीपादुकां पूजयामि तर्पयामि नमः।

३ मूलं ललिताम्बाश्रीपादुकां पूजयामि तर्पयामि नमः ।

एताः अतिरहस्ययोगिन्यः सर्वसिद्धिप्रदे चक्रे समुद्रा इत्यादि स्पष्टम् । कामेश्वर्या अग्रे ऐं ह्लीं श्रीं ह्स्रैं ह्स्क्लरीं ह्स्रौः त्रिपुराम्बाचक्रेश्वरीश्रीपादुकां पूजयामि तर्पयामि नमः, इत्यवमृश्य ३ ह्सौः इति सर्वबीजमुद्रां विनिर्दिशेत् ।

**अभीष्टसिद्धिं मे देहि शरणागतवत्सले ।**
**भक्त्या समर्पये तुभ्यम् अष्टमावरणार्चनम् ।।**

अष्टमावरणम्

## नवमावरणम्

बिन्द्वभिन्नपरब्रह्मात्मके बिन्दुचक्रे ऐं ह्लीं श्रीं मूलं ललिताम्बा श्रीपादुकां पूजयामि तर्पयामि नमः, इति श्रीदेवीं पूजयेत् । ततः एषा परापररहस्ययोगिनी सर्वानन्दमये चक्रे समुद्रा ससिद्धिः सायुधा सशक्तिः सवाहना सपरिवारा सर्वोपचारैः सम्पूजिता सन्तर्पिताऽस्तु इत्यभ्यर्च्य, पुनः––ऐं ह्लीं श्रीं मूलं श्रीललितामहाचक्रेश्वरीश्रीपादुकां पूजयामि तर्पयामि नमः, इत्यभिपूज्य ३ ऐं इति योनिमुद्रां प्रदर्शयेत् । षोडश्युपासनायां तु ऐं इति त्रिखण्डामपि ।

**अथीष्टसिद्धिं मे देहि शरणागतवत्सले ।**
**भक्त्या समर्पये तुभ्यं नवमावरणार्चनम् ।।**

इति नवमावरणम्

## षोडश्युपासनायां तु

३ हसकल हसकहल सकलह्रीं तुरीयाम्बाश्रीपादुकां पूजयामि तर्पयामि नमः इति त्रिः सन्तर्प्य––षोडशीमन्त्रेण बिन्दौ राजराजेश्वरीं त्रिः सन्तर्प्य,

३ सर्वानन्दमये चक्रे महोड्याणपीठे चर्यानन्दनाथात्मकतुरीयातीतदशाधिष्ठायक––शान्त्यतीतकलात्मक–– प्रकाशविमर्श –– सामरस्यात्मक - परब्रह्मस्वरूपिणी - परामृतशक्तिः - सर्वमन्त्रेश्वरी - सर्व पीठेश्वरी - सर्वयोगेश्वरी - सर्ववागीश्वरी - सर्वसिद्धेश्वरी - सर्ववीरेश्वरी

सकलजगदुत्पत्तिमातृका सचक्रा सदेवता सासना सायुधा सशक्तिः सवाहना सपरिवारा सचक्रेशिका परया अपरया परापरया सपर्यया सर्वोपचारैः सम्पूजिता सन्तर्पिता सन्तुष्टास्तु नमः इति समष्टचञ्जलिं विधाय,

३ सं सर्वकामसिद्धिश्रीपादुकां पूजयामि तर्पयामि नमः ।

३ ह्स्रैं ह्स्रीं ह्स्रौः सर्वत्रिखण्डमुद्राशक्तिश्रीपादुकां पूजयामि तर्पयामि नमः ।

३ ह्स्रैं ह्स्क्लरीं ह्स्रौः सर्वत्रिखण्डमुद्रां प्रदर्श्य,

३ मूलेन देवीं त्रिः सन्तर्प्य,

धूपं दीपं नैवेद्यं ताम्बूलं नीराजनं च समर्प्य,

**अभीष्टसिद्धिं मे देहि शरणागतवत्सले ।**

**भक्त्या समर्पये तुभ्यं नवमावरणार्चनम् ।** इति पूजां समर्प्य,

३ परापरातिरहस्ययोगिनीमयूखायै नवमावरणदेवतासहितायै श्रीललितामहात्रिपुरसुन्दरीपराभट्टारिकायै नमः इति योनिमुद्रया प्रणमेत् ।

## अथ पञ्चपञ्चिका :

प्रथमपञ्चिका=पञ्चलक्ष्मी

१ मूलविद्या––पञ्चदशी अथवा षोडशी।

२ श्रीं––लक्ष्मीश्री पा० पू० त० नमः ।

३ ओं श्रीं ह्रीं श्रीं कमले कमलालये प्रसीद प्रसीद श्रीं ह्रीं श्रीं ओं महालक्ष्म्यै नमः––महालक्ष्मी,

४ श्रीं ह्रीं क्लीं––त्रिशक्ति,

५ श्रीं सह कल ह्रीं श्रीं––साम्राज्यलक्ष्मीश्रीपा० पू० त० नमः ।

द्वितीयपञ्चिका––पञ्चकोशाः

१ मूलविद्या––श्रीविद्याकोशाम्बिकाश्री पा० पू० त० नमः

२ ओं ह्रीं हं सः सोहं स्वाहा––परं ज्योतिः,

३ ओं––परा निष्कलशाम्भवी,

४ हं सः––अजपा,

५ अं० क्षं––मातृका कोशाम्बाश्रीपादुकां पूजयामि तर्पयामि नमः ।

तृतीयपङ्क्तिका=पञ्चकल्पलता

श्रीविद्याकल्पलताम्बाश्रीपा० पू० त० नम इति पञ्चावृत्तिः ।

१ मूलविद्या श्रीपा० पू० त०

२ ह्रीं क्लीं ऐं ब्लूं स्त्रीं––पञ्चकामेश्वरी,

३ ओं ह्रीं ह्‌स्त्रैं ह्रीं ओं सरस्वत्यै नमः––परिजातेश्वरी,

४ क्लीं ऐं साः––कुमारी,

५ द्रां द्रीं क्लीं ब्लूं सः––पञ्चबाणेश्वरी श्रीपा० पू० त० नमः ।

चतुर्थपङ्क्तिका=कामदुघापञ्चकम्

१ मूलविद्या श्रीविद्याकामदुघाम्बाश्रीपा० पू० त० नमः

२ ओं ह्रीं हंसः सञ्जीवनि जूं जीवं प्राणग्रन्थिस्थं कुरु कुरु सः स्वाहा––अमृतपीठेश्वरीकामदुघाम्बाश्रीपा० पू० त० नमः

३ वद वद वाग्वादिनि ह्‌स्त्रैं क्लिन्ने क्लेदिनि महाक्षोभं कुरु कुरु ह्‌स्क्लीं ओं मोक्षं कुरु कुरु ह्‌स्त्रौं––सुधाकामदुघाम्बाश्रीपा० पू० त०

४ ऐं प्लूं झ्रौं जूं सः अमृते अमतोद्भवे अमृतेश्वरि अमृतवर्षिणि, अमृतं स्रावय स्रावय स्वाहा––अमृतेश्वरीकामदुघाम्बाश्रीपा०पू० त०

५ ओं श्रीं ह्रीं क्लीं ओं नमो भगवति माहेश्वरि अन्नपूर्णे ममाभिलषितमन्नं देहि स्वाहा––अन्नपूर्णाकामदुघाम्बाश्रीपा० पू० त० नमः

पञ्चमपङ्क्तिका=रत्नपञ्चकम्

१ मूलविद्या––श्रीविद्यारत्नाम्बाश्रीपा० पू० त० नमः

२ ज्इम्रीं महाचण्डतेजःसङ्कर्षणकालिमन्थाने हः––सिद्धलक्ष्मी रत्नाम्बाश्रीपा० पू० त० नमः

३ ऐं ह्रीं श्रीं ऐं क्लीं सौः ओं नमो भगवति राजमातङ्गीश्वरि सर्वजनमनोहरि सर्वमुखरञ्जिनि क्लीं ह्रीं श्रीं सर्वराजवशङ्करि सर्वस्त्रीपुरुषवशङ्करि सर्वदुष्टमृगवशङ्करि सर्वसत्ववशङ्करि सर्वलोकवशङ्करि सर्वजनं मे वशमानय स्वाहा सौः क्लीं ऐं श्रीं ह्रीं ऐं राजमातङ्गीरत्नाम्बाश्रीपा० पू० त० नमः

४ श्रीं ह्रीं श्रीं––भुवनेश्वरीरत्नाम्बा,

५ ओं ऐं ग्लौं सौः क्लीं ओं नमो भगवति वार्तालि वार्तालि वाराहि-वाराहि वाराहमुखि वाराहमुखि ऐं ग्लौं ऐं अन्धे अन्धिन्यै नमः रुन्धे रुन्धिन्यै नमः जम्भे जम्भिन्यै नमः स्तम्भे स्तम्भिन्यै नमः मोहे मोहिन्यै नमः ऐं ग्लौं सौः सर्वदुष्टप्रदुष्टानां सर्वेषां वाक्चित्तचक्षुर्मुखगतिमतिक्रोधजिह्वास्तम्भनं कुरु कुरु शीघ्रं वश्यं कुरु कुरु ऐं ग्लौं ऐं ठः ठः ठः ठः हुँ फट् स्वाहा वाराहीरत्नाम्बाश्रीपा० पू० त० नमः।

अथ षड्दर्शनानि—

३ तारे तुतारे तुरे स्वाहा—तारादेव्यधिष्ठितबौद्धदर्शनश्रीपा० पू० त० नमः।

३ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् परो रजसे सावदों—ब्रह्मदेवताधिष्ठितवैदिकदर्शनश्रीपा० पू० त०,

३ ओं ह्लौं—रुद्रदेवताधिष्ठितशैवरदर्शनश्रीपा० पू० त०,

३ ह्लां ह्लीं हं सः सूर्यदेवताधिष्ठितसौरदर्शनश्रीपा० पू० त०,

३ ओं नमो नारायणाय विष्णुदेवताधिष्ठितवैष्णवदर्शनश्रीपा० पू० त०,

३ ह्रीं—भुवनेश्वरीदेवताधिष्ठितशाक्तदर्शनश्रीपा० पू० त० नमः

भूतशक्तिमंत्राः—

उ ऊ ओ ग ज ड द ब ल ल—पृथ्वीशक्तिश्रीपा० पू० त० नमः।

ऋ ॠ औ घ झ ढ ध भ व स—जलशक्ति,

इ ई ऐ ख छ ठ थ फ र क्ष—अग्निशक्ति,

अ आ ए क च ट त प य ष—वायुशक्ति,

ऌ ॡ अं ङ ञ ण न म ह—आकाशशक्तिश्रीपा० पू० त० नमः

चतुःसमयमंत्राः—

३ ऐं क्लीं सौः ओं नमः कामेश्वरि इच्छाकामफलप्रदे सर्वसत्ववशङ्करि सर्वजगत्क्षोभणकरि हुं हुं हुं द्रां द्रीं क्लीं ब्लूं सः सौः क्लीं ऐं कामेश्वरीसमयदेवताश्री पा० पू० त० नमः

३ ऐं ह्लीं सर्वकार्यार्थसाधिनि वज्रेश्वरि वज्रपदे वज्रपञ्जरमध्यगे ह्लीं क्लिन्ने ऐं क्रों नित्यमदद्रवे हुं फ्रें ह्लिंवज्रनित्यायै नमः वज्रेश्वरी समयदेवताश्रीपा० पू० त०,

३ भगमालिमन्त्र एव। भगमलिनीसमयदेवताश्रीपा० पू० त०,

३ क्लीं भगवति ब्लूं कामेश्वरि ह्रीं सर्वसत्त्ववशङ्करि सः त्रिपुरभैरवि ऐं विच्चे क्लीं महात्रिपुरसुन्दर्यै नमः महात्रिपुरसुन्दरीसमयदेवता० श्रीपा० पू० त० नमः।

## जपविधिः

अस्य श्रीमहात्रिपुरसुन्दरीपञ्चदशाक्षरीमहामन्त्रस्य ३ आनन्दभैरवाय ऋषये नमः—शिरसि। ३ पङ्क्त्यै छन्दसे नमः—मुखे। ३ श्रीमहात्रिपुरसुन्दर्यै दवतायै नमः—हृदि। ३ ऐं बीजाय नमः—गुह्ये। ३ सौः शक्तये नमः—पादयोः। ३ क्लीं कीलकाय नमः—नाभौ। (उक्तबीजशक्तिकीलकानि नाभिगुह्यपादेषु प्रायशो न्यस्तव्यनीति मूलविद्याखण्डत्रयेणापि न्यस्तव्यानीति च केषाञ्चिदभिमतम्)। ३ श्रीललितामहात्रिपुरसुन्दरीप्रसादसिध्यर्थे जपे विनियोगः—करसम्पुटे।

ऐं ह्रीं श्रीं मूलविद्यया सर्वाङ्गे त्रिः व्यापकम्।

३ क ए ई ल ह्रीं अंगुष्ठाभ्यां नमः।

३ ह स क ह ल ह्रीं तर्जनीभ्यां स्वाहा।

३ स क ल ह्रीं मध्यमाभ्यां वषट्।

३ क ए ई ल ह्रीं अनामिकाभ्यां हुं।

३ ह स क ह ल ह्रीं कनिष्ठिकाभ्यां वौषट्।

३ स क ल ह्रीं करतलकरपृष्ठाभ्यां फट्।

एवं हृदयादिन्यासः। यथा—

ऐं ह्रीं श्रीं क ए ई ल ह्रीं हृदयाय नमः।

३ ह स क ह ल ह्रीं शिरसे स्वाहा।

३ स क ल ह्रीं शिखायै वषट्।

३ क ए ई ल ह्रीं कवचाय हुम्।

३ ह स क ह ल ह्रीं नेत्रत्रयाय वौषट्।

३ स क ल ह्रीं अस्त्राय फट्। भूर्भुवस्सुवरों इति दिग्बन्धः।

अथ ध्यानम्। तच्च पूर्वोक्तमेव।

श्रीषोडशाक्षर्यास्तु दक्षिणामूर्तिः ऋषिः। करषडङ्गन्यासयोः तत्कूटषट्कमिति विशेषः।

ततः शक्त्युत्थापनमुद्रया स्वदेहे शून्यतां विभाव्य बिन्दुत्रय-सपरार्धरूपां कामकलां विचिन्त्य तस्याः स्वात्मतया परिणामं श्रीगुरु-मुखावगतं विभाव्य श्रीगुरुदेवतामन्त्रात्मनामैक्यं भावयेत्। अथ मूर्ध्नि शिरोमुद्रां न्यस्य ३ ऐं क्लीं ह्रीं त्रिपुरे भगवति स्वाहा इति द्वादशाक्षरीं कुल्लुकाविद्यां, ततो हृदयमुद्रया (हृदि हस्तं दत्वा) ३ ओं इत्येकाक्षरं सेतुम्, अथ कण्ठे न्यासमुद्रया ३ ह्रीं इत्येकाक्षरं महासेतुम्, तदनु नाभौ पूर्वमुद्रयैव ३ ओं अं० क्षं (५१) ऐं मूलं ऐं अं...क्षं (५१) ओं इति एकविंशाधिकैकशताक्षरं निर्वाणमन्त्रं च त्रिस्त्रिः जपेत्। ऐं ह्रीं श्रीं क्लीं इति कामेश्वरीमन्त्रं स्वाधिष्ठाने त्रिः जपेत्।

३ ईं इति कामकलामन्त्रं मूलाधारे त्रिः जपेत्।

३ समस्तप्रकटगुप्तगुप्ततरसम्प्रदायकुलोत्तीर्णनिगर्भरहस्यातिरह-स्यपरापररहस्ययोगिनीभ्यो नमः इति समष्टिमन्त्रं जपेत्।

३ ई ए क ल ह्रीं ह स क ह ल ह्रीं स क ल ह्रीं
इति पञ्चदशाक्षरमुत्कीलनं सप्तवारं जपेत्।

**३ विद्युदक्षीं परां विद्यां कालिकां देशभाषिणीम्।**
**खड्गमुण्डविकाराख्यां व्याघ्रचर्मविभूषिताम्॥**
**रक्तमाल्याम्बरधरां घोररूपां चतुर्भुजाम्।**
**खड्गं शूलं कपालं च दधतीं तीक्ष्णनासिकाम्।**
**सिद्धयर्थं चिन्तयेद्देवीं सर्वविद्यासुजीविनीम्॥**

इति सञ्जीविनीं ध्यात्वा पञ्चधोपचर्य, ३ श्रीं क्लीं क्लीं हैं हैं क ल ह्रीं सौः ल स क ह्रीं क्लीं क्लीं ह्रीं श्रीं इति सप्तदशाक्षरं सञ्जी-विनीमन्त्रं सप्तवारं जपेत्।

ऐं ह्रीं श्रीं ह्रीं श्रीं हंसः क ए ई ल ह्रीं, ह स क ह ल ह्रीं स क ल ह्रीं हंसः ह्रीं श्रीं इति त्रयोविंशत्यक्षरं प्राणमन्त्रं सप्तवारं जपेत्।

३ ओं श्रीं ऐं क्लीं ह्रीं क ए ई ल ह्रीं ओं ह्रीं श्रीं क्लीं ऐं ह स क ह ल ह्रीं, ओं ऐं श्रीं क्लीं ह्रीं क ल ए ह्रीं ह क ह ल ह्रीं ह ए क ल ह्रीं, ओं ऐं क्लीं श्रीं ह्रीं क ह ल ए ह्रीं क ह ए ल ह्रीं क ह ह

ल ह्रीं हंसः, ओं ह्रीं हंसः सोहं स क ल ह्रीं इति त्रिसप्तत्यक्षरं दीपिनीमन्त्रं च प्रत्येकं सप्तवारं जपेत् ।

इमे मन्त्राः पञ्चदशीषोडशीनां साधारणाः ।

षोडशाक्षर्या असाधारणाः पञ्चमन्त्राः । यथा––

ऐं ह्रीं श्रीं ऐं क्लीं सौः ओं ह्रीं श्रीं ह स क्ष म ल व र यूं, स ह-क्ष म ल व र यीं, य र ल व क्ष म ल व र यूं ओं ह्रीं श्रीं ओं सौः क्लीं ऐं इति महाकामेश्वरमन्त्रं दशवारं जपेत् ।

३ (पञ्चदशी) क ए ई ल ह्रीं ह स क ह ल ह्रीं स क ल ह्रीं–– त्रिवारं जपेत् ।।१।।

३ (षोडशी) श्रीं ह्रीं क्लीं ऐं सौः ओं ह्रीं श्रीं क ए ई ल ह्रीं ह स क ह ल ह्रीं स क ल ह्रीं सौः ऐं क्लीं ह्रीं श्रीं त्रिवारं जपेत् ।।२।।

३ ऐं क्लीं सौः बालायै नमः त्रिवारं जपेत् ।।३।।

३ ऐं क्लीं उच्छिष्टचाण्डालि सुमुखि देवि महापिशाचिनि ह्रीं ठः ठः ठः स्वाहा––त्रिवारं जपेत् ।।४।।

३ ओं ह्रीं स्त्रीं ह्रूं क्रीं श्रीं उग्रतारे सौः क्लीं ह्रीं श्रीं स्वाहा–– त्रिवारं जपेत् ।।५।।

एते पञ्च मन्त्राः पञ्चरत्नपदेन उच्यन्ते ।

ततः सूतकनिवारणाय प्रणवसम्पुटितां मूलविद्यां (पञ्चदशीं) दशवारमावर्त्यानन्तरं विघ्नहरान् षण्मन्त्रान् त्रिस्त्रिर्जपेत् । यथा––

ऐं ह्रीं श्रीं इ रि मि लि कि रि कि लि प रि मि रोम् ।

३ ओं ह्रीं नमो भगवति महात्रिपुरभैरवि मम त्रैपुररक्षां कुरु कुरु ।

३ संहर संहर विघ्नरक्षोविभीषकान् कालय हुं फट् स्वाहा ।

३ ब्लूं रक्ताभ्यो योगिनीभ्यो नमः ।

३ सां सारसाय बह्वाशनाय नमः ।

३ दु मु लु षु मु लु षु ह्रीं चामुडायै नमः ।

एते कुल्लूकाद्या विघ्नहरान्ता जपस्य पूर्वाङ्गमन्त्राः ।

त्रितारीपूर्वकत्वं तु सर्वेषां सिद्धमेव ।

ऐं क्लीं ह्रीं श्रीं भगवति त्रिपुरसुन्दरि स्वाहा कुलुकां शिरसि, ओं सेतुं हृदि, द्रीं महासेतुं कण्ठे, ह्रीं महासेतुं सहस्रारे, औं श्रीं अं एं क्लीं

सौः अं आं इं ईं उं ऊं. . . .क्षं इति निर्वाणं नाभौ, क्लीं कामबीजं लिङ्गे, जिह्वायां मूलविद्यां विचिन्त्य जपेत् ।

ततः पेशीच्छन्नां सुवर्णरत्नस्फटिकमणिपुत्रजीवरुद्राक्षाद्यन्यतम-निर्मितां मालां श्यामाक्रमे वक्ष्यमाणेन संस्कारविधिना संस्कृतामादाय, क्वचित्पात्रे वामपाणौ वा निधाय, सामान्यार्घ्योदकेन शुद्धोदकेन वा मूलेनाभ्युक्ष्य,

**ओं मां माले महामाये सर्वशक्तिस्वरूपिणि ।**
**चतुर्वर्गस्त्वयि न्यस्तस्तस्मान्मे सिद्धिदा भव ।।**

इति प्रार्थ्य, ह्रीं सिध्यै नमः इति मन्त्रेण पुनः पुनः आवृत्तेन गन्धादिभिः पञ्चभिः गन्धपुष्पाभ्यामेव वा सम्पूज्य, ऐं ह्रीं श्रीं गं

**अविघ्नं कुरु माले त्वं करे गृह्णामि दक्षिणे ।**
**जपकाले तु सततं प्रसीद मम सिद्धये ।।**

इति दक्षिणहस्तेन मालां गृहीत्वा, मध्यमामध्यपर्वावलम्बिनीं तां तर्जन्या वामहस्तेन चास्पृशन् एकमणिग्रहणे अन्यमनुपाददानः क्रमादङ्गुष्ठाग्रेण मणीन् परिवर्तयन् जृम्भाक्षुताद्यकुर्वन् अनिद्राणः, एतेषां सम्भवे आचम्य देवतात्मत्वं भावयन्, मालामपातयन् प्रमादपतितायामुक्तसंस्कारं कृत्वा खटखटाशब्दमकुर्वाणः अश्लिष्टमनुच्चारयन् असम्भाषमाणो मालामप्रदर्शयन् अन्यदप्युक्तमाचरन् श्रीगुरुमुखादवगतं षडर्थाद्यन्यतममर्थं चतुर्विधैक्यशून्यषट्कावस्थापञ्चकविषुवत्सप्तकमन्त्रचैतन्यादिरहस्यजातं चानुसन्दधानो यथाऽधिकारं मनसोपांशुना वा सहस्रं त्रिशतं शतं वा मूलविद्यामारम्भे प्रोक्तसंख्यावधौ च प्रणवपुटितां सकृज्जपित्वा उत्तराङ्गमन्त्रान् जपदशमांशमावर्तयेत् ।

## जपोत्तराङ्गमन्त्राः

ते तु त्रिपुराद्यष्टचक्रेश्वरीमन्त्रा अष्टौ——

ऐं ह्रीं श्रीं अं आं सौः, ३ ऐं क्लीं सौः, ३ ह्रीं क्लीं सौः, ३ हैं ह्क्लीं ह्सौः, ३ ह्सैं ह्क्लीं ह्स्सौः, ३ ह्रीं क्लीं ब्लें, ३ ह्रीं श्रीं सौः, ३ ह्स्रैं ह्स्क्लीं ह्स्रौः ।

मूलमेकं—ऐं ह्लीं श्रीं क ए ई ल ह्रीं ह स क ह ल ह्रीं सकल ह्रीं ।

तत्तत्तिथिनित्याविद्या—ताश्च शुक्लपक्षे कामेश्वर्यादिचित्रान्ताः । कृष्णपक्षे तु चित्रादिकामेश्वर्यन्ताः । तिथिवृद्धावेकां नित्यां दिनद्वये, तिथिक्षये एकस्मिन् दिवसे नित्याद्वयम्, इति क्रमेण जप्याः । यथा—

ऐं ह्रीं श्रीं अं ऐं स क ल ह्रीं नित्यक्लिन्ने मदद्रवे सौः ।

३ आं ऐं भगभुगे भगिनि भगोदरि भगमाले भगावहे भगगुह्ये भगयोनि भगनिपातिनि सर्वभगवशङ्करि भगरूपे नत्यक्लिन्ने भगस्वरूपे सर्वाणि भगानि मे ह्यानय वरदे रेते सुरेते भगक्लिन्ने क्लिन्नद्रवे क्लेदय द्रावय अमोघे भगविच्चे क्षुभ क्षोभय सर्वसत्वान् भगेश्वरि ऐं ब्लूं जें ब्लूं भें ब्लं मों ब्लूं हें ब्लूं हें क्लिन्ने सर्वाणि भगानि मे वशमानय स्त्रीं हरब्लें ह्रीम् ।

३ इं ओं ह्रीं नित्यक्लिन्ने मदद्रवे स्वाहा ।

३ ईं ओं क्रों भ्रों क्रौं झ्रौं छ्रौं ज्रौं स्वाहा ।

३ उं ओं ह्रीं वन्हिवासिन्यै नमः ।

३ ऊं ह्रीं क्लिन्ने ऐं क्रों नित्यमदद्रवे ह्रीं ।

३ ऋं ह्रीं शिवदूत्यै नमः ।

३ ॠं ओं ह्रीं हुं खे च छे क्षः स्त्रीं हुं क्षे ह्रीं फट् ।

३ ऌं ऐं क्लीं सौः ।

३ ॡं ह स क ल र डैं ह स क ल र डीं ह स क ल र डौः ।

३ एं ह्रीं फ्रें स्रूं क्रों आं क्लीं ऐं ब्लूं नित्यमदद्रवे हुं फ्रें ह्रीम् ।

३ ऐं भ्म्र्य्ऊं ओं ।

३ ओं स्वौं ।

३ औं ओं नमो भगवति ज्वालामालिनि देवदेवि सर्वभूतसंहारकारिके जातवेदसि ज्वलन्ति ज्वल ज्वल प्रज्वल प्रज्वल ह्रां ह्रीं ह्रूं (र र र र र र र ज्वालामालिनि हुं फट् ।)

३ अं च्कौम् ।

अङ्गोपाङ्गप्रत्यङ्गीभूता बाला अन्नपूर्णा अश्वारूढा इति त्रयो वक्ष्यमाणाश्चेति मन्त्राः त्रयोदश ।

ऐं ह्रीं श्रीं ऐं क्लीं सौः सौः क्लीं ऐं ऐं क्लीं सौः इति श्रियोऽङ्गं बाला ।

३ ह्रीं श्रीं क्लीं ओं नमो भगवति अन्नपूर्णेश्वरि ममाभिलषितमन्नं देहि स्वाहा इति अथ उपाङ्गमन्नपूर्णा ।

३ ओं आं ह्रीं क्रों एहि परमेश्वरि स्वाहा इति श्रीप्रत्यङ्गमश्वारूढा । कालनित्या तु सूत्रकृताऽनुपात्ता ।

अथ पुनः ऋष्यादिमानसपूजाऽन्तं विधाय सबीजाः सर्वसंक्षोभिण्यादिमुद्राः आयुधमुद्राश्च प्रदर्श्य,

**गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपम् ।**
**सिद्धिर्भवतु मे देवि त्वत्प्रसादान्मयि स्थिरा ॥**

इति देव्या वामकरे सामान्यार्घ्यसलिलप्रक्षेपेण जपं निवेद्य,

**त्वं माले सर्वदेवानां प्रीतिदा शुभदा मम ।**
**शुभं कुरुष्व मे भद्रे यशो वीर्यं च सर्वदा ॥**

इति मालां सम्प्रार्थ्य, निगूढं निधाय, श्रीगुरुपादुकामन्त्रं मुहुरुच्चारयन् गुरुपरमगुरुपरमेष्ठिगुरून् तत्तन्नामपूर्वं प्रणमेत् ।

इति जपविधिः ॥

अथ पुनरपि श्रीदेव्यै पूर्ववत् धूपदीपौ कल्पयित्वा संक्षोभिण्यादिमुद्राः सबीजाः प्रदर्श्य, मूलेन त्रिवारं सन्तर्प्य महानैवेद्यं समर्पयेत् । यथा——श्रीदेव्यग्रे चतुरस्रमण्डलं सामान्योदकेन विधाय तत्र आधारोपरि स्थापितं सौवर्णरौप्यकांस्यादिस्थालीचषकभरितं भक्ष्यभोज्यचोष्यलेह्यपेयात्मकं सद्रव्यशुध्यादिरसवद्व्यञ्जनमञ्जुलं प्राज्यकपिलाज्यं दधिदुग्धमुग्धं यथासम्भवं वा नैवेद्यं विधाय, ("स्विन्नं वामे आमं दक्षिणे निदध्यात्" इति श्यामारहस्ये दृष्टम् । सुन्दरीमहोदये तु——"देव्या वामे दीपो दक्षिणे नैवेद्यम्" इत्युक्तम्), ऐं ह्रीं श्रीं मूलेन त्रिः प्रोक्ष्य, वं इति धेनुमुद्रया अमृतीकृत्य, सप्तवारं मूलेनाभिमन्त्र्य, पूर्ववत् अपोशनं कल्पयित्वा,

**हेमपात्रगतं देवि परमान्नं सुसंस्कृतम् ।**
**पञ्चधा षड्रसोपेतं गृहाण परेश्वरि ॥**

इति प्रार्थ्य, पूर्वोक्तनैवेद्योपचारमन्त्रेण निवेद्य, तत्तन्मुद्राविधान-पूर्वकं पञ्चप्राणाहुतीः कल्पयेत् । यथा--

ऐं ह्रीं श्रीं ऐं प्राणाय स्वाहा, ३ क्लीं अपानाय स्वाहा, ३ सौः व्यानाय स्वाहा, ३ सौः उदानाय स्वाहा, ३ ऐं क्लीं सौः समानाय स्वाहा, ब्रह्मणे स्वाहा ।

ततः--

ऐं ह्रीं श्रीं क ए ई ल ह्रीं नमः आत्मतत्त्वव्यापिनी ललिता तृप्यतु ।

३ ह स क ह ल ह्रीं नमः विद्यातत्त्वव्यापिनी ललिता तृप्यतु ।

३ स क ल ह्रीं नमः शिवतत्त्वव्यापिनी ललिता तृप्यतु ।।

ऐं ह्रीं श्रीं क ए ई ल ह्रीं ह स क ह ल ह्रीं स क ल ह्रीं नमः सर्वतत्त्वव्यापिनी ललिता तृप्यतु ।

इति निमीलितनयनः क्षणमवस्थाय, श्रीदेवीं भुक्तवतीं विभाव्य, पूर्ववद् उपचारमन्त्रैः पानीयोत्तरापोशनकरप्रक्षालनगण्डूषपाद्यादि कल्पयित्वा, भोजनपात्रं नैर्ऋत्यां निरस्य, अस्त्रेण स्थलं संशोध्य, ततः पुनः प्राग्वदाचमनीयकर्पूरवीटिकादक्षिणाकर्पूरनीराजनानि दत्वा, सुवर्णादिभाजनलिखितं कुङ्कुमपङ्करेखात्मकम् अष्टदलकमलकर्णिका-स्थापितमणिमयचषकपूरितं प्रथमं प्रज्वाल्य पुष्पाक्षतैरभ्यर्च्य, उप-चारमन्त्रपूर्वकम्--

**अन्तस्तेजो बहिस्तेजो एकीकृत्यामितप्रभम् ।**
**त्रिधा दीपं परिभ्राम्य कुलदीपं निवेदये ।।**

इति चतुर्दशधा नवधा त्रिधा वा परिभ्राम्य दक्षभागे स्थापयेत् ।

मन्त्रपुष्पम्

अथाञ्जलौ पुष्पाण्यादाय मन्त्रपुष्पम् । यथा--

**शिवे शिवसुशीतलामृततरङ्गगन्धोलस-**
**न्नवावरणदेवते नवनवामृतस्यन्दिनि ।**
**गुरुक्रमपुरस्कृते गुणशरीरनित्योज्ज्वले**
**षडङ्गपरिवारिते कलित एष पुष्पाञ्जलिः ।।**

इति उक्त्वा पुष्पाञ्जलिं समर्पयेत्। इत्येते कतिचिच्चतुष्षष्ट्युपचारातिरिक्ता उपचारास्तु पूर्ववत् धूपदीपेतिसूत्रगतेनादिपदेन गृह्यन्ते।

## कामकलाध्यानम्

अथ बिन्दुना मुखं बिन्दुद्वयेन स्तनौ सपरार्धेन योनिरिति सानुस्वारे तुरीयस्वरे कामकलात्मिकां ध्यात्वा, सौः इति देवीशक्तिबीजं श्रीदेव्या हृदयत्वेन भावयेत्।

## होमस्य कृताकृतत्वम्

अथ होमः। स च "यद्यग्निकार्यसम्पत्तिः" इति सूत्रगतेन यदिशब्देन कृताकृतः सूचितः। तस्य च करणपक्षे तदितिकर्तव्यता होमप्रकरणाद् ज्ञातव्या। तत्र च महाव्याहृतिहोमादर्वागेव बलिदानम्। होमाकरणपक्षे तु बलिदानमात्रम्।

## बलिदानविधिः

यथा—देव्या दक्षभागे सामान्योदकेन त्रिकोणवृत्तचतुरस्रात्मकं मण्डलं परिकल्प्य, ३ ऐं व्यापकमण्डलाय नमः इति गन्धाक्षतैरभ्यर्च्य, अर्घभक्तपूरितोदकं सक्षीरादित्रयं पात्रं तत्र विन्यस्य ३ ओं ह्रीं सर्वविघ्नकृद्भ्यः सर्वभूतेभ्यो हुं फट् स्वाहा इति मन्त्रं त्रिः पठित्वा दक्षकरार्पितं वामकरतत्त्वमुद्रास्पृष्टं सलिलं बल्युपरि दत्वा वामपार्ष्णिघातकरास्फोटौ कुर्वाणः समुदञ्चितवक्त्रो बाणमुद्रया बलिं भूतैः ग्रासितं विभाव्य प्रणमेत्। इति बलिदानविधिः।

## प्रदक्षिणा

**अजेशशक्तिगणपभास्कराणां क्रमादिमाः।**
**वेदार्थचन्द्रवह्न्यद्रिसंख्याः स्युः सर्वसिद्धये॥**

प्रदक्षिणनमस्कारानन्तरं जपप्रकरणोक्तविधिना जपं निर्वर्त्य स्तुवीत—

## स्तोत्रम्

शिवे शिवसुशीतलामृततरङ्गगन्धोल्लस-
न्नवावरणदेवते नवनवामृतस्यन्दिनि ।
गुरुक्रमपुरस्कृते गुणशरीरनित्योज्ज्वले
षडङ्गपरिवारिते कलित एष पुष्पाञ्जलिः ॥

समस्तमुनियक्षकिम्पुरुषसिद्धविद्याधर-
गुहासुरसुराप्सरोगणमुखैर्गणैः सेविते ।
निवृत्तितिलकाम्बरप्रकृतिशान्तिविद्याकला-
कलापमधुराकृते कलित एष पुष्पाञ्जलिः ॥

त्रिवेदकृतविग्रहे त्रिविधकृत्यसन्धायिनि
त्रिरूपसमवायिनि त्रिपुरमार्गसञ्चारिणि ।
त्रिलोचनकुटुम्बिनि त्रिगुणसंविदुद्यत्पदे
त्रयि त्रिपुरसुन्दरि त्रिजगदीशि पुष्पाञ्जलिः ॥

पुरन्दरजलाधिपान्तककुबेररक्षोहर-
प्रभञ्जनधनञ्जयप्रभृतिवन्दनानन्दिते ।
प्रवालपदपीठिकानिकटनित्यवर्तिस्वभू-
विरिञ्चिविहितस्तुते विहित एष पुष्पाञ्जलिः ॥

यदानतिबलादलङ्कृतिरुदेति विद्यावय-
स्तपोद्रविणसौरभाकृतिकवित्वसम्पन्मयी ।
जरामरणजन्मजं भयमुपैति तस्यै समा-
हिताखिलसमीहितप्रसवभूमि तुभ्यं नमः ॥

निरावरणसंविदुद्गमपरास्तभेदोल्लस-
त्पदास्पदचिदेकतावरशरीरिणि स्वैरिणि ।
रसायनतरङ्गिणीरुचितरङ्गसञ्चारिणि
प्रकामपरिपूरणि प्रसृत एष पुष्पाञ्जलिः ॥

तरङ्गयति सम्पदं तदनु संहरत्यापदं
सुखं वितरति श्रियं परिधिनोति हन्ति द्विषः ।
क्षिणोति दुरितानि यत्प्रणतिरम्ब तस्यै सदा
शिवङ्करि शिवे परे शिवपुरन्ध्रि तुभ्यं नमः ॥

त्वमेव जननी पिता त्वमथ बान्धवस्त्वं सखा
त्वमायुरपरं त्वमाभरणमात्मनस्त्वं कला ।
त्वमेव वपुषःस्थितिस्त्वमखिलायतिस्त्वं गुरुः
प्रसीद परमेश्वरि प्रणतिपात्रि तुभ्यं नमः ।।

कञ्जासनादिसुरवृन्दलसत्किरीट
कोटिप्रघर्षणसमुज्ज्वलदङ्घ्रिपीठे ।
त्वामेव यामि शरणं विगतान्यभावं
दीनं विलोकय दयार्द्रविलोचनेन ।।

महामन्त्रराजान्त्र बीजं पराख्यं स्वतो न्यस्तविन्दु स्वयंन्यस्तहार्दम् ।
भवद्वक्त्रवक्षोजगुह्याभिधानं स्वरूपं सकृद्भावयेत् सत्वमेव ।।
तथान्ये विकल्पेषु निर्विण्णचित्तास्तदेकं समाधाय बिन्दुत्रयं ते ।
परानन्दसंधानसिन्धौ निमग्नाः पुनर्गर्भरन्ध्रं न पश्यन्ति धीराः ।।

श्रीललितामहात्रिपुरसुन्दर्यै नमः पुष्पाञ्जलिं समर्पयामि ।

## अथ मूलदेवता स्तुतिः

कल्याणवृष्टिभिरवामृतपूरिताभि-
र्लक्ष्मी स्वयंवरजमङ्गलदीपिकाभिः ।
सेवाभिरम्ब तव पादसरोजमूले
नाकारि किं मनसि भक्तिमतां जनानाम् ।।१।।
एतावदेव जननि स्पृहणीयमास्ते
त्वद्वन्दनेषु सलिलस्थगिते च नेत्रे ।
सांनिध्यमुद्यदरुणायतसोदरस्य
त्वद्विग्रहस्य सुधया परयाऽऽप्लुतस्य ।।२।।
ईशत्वभागकलुषाः कतिनाम सन्ति
ब्रह्मादयः प्रतियुगं प्रलयाभिभूताः ।
एकः स एव जननि स्थिरसिद्धिरास्ते
यः पादयोस्तु सुकृती प्रणतिं करोति ।।३।।
लब्ध्वा सकृत् त्रिपुरसुन्दरि तावकीनं
कारुण्यकन्दलितकान्तिभरं कटाक्षम् ।

कन्दर्पभावसुभगास्त्वयि भक्तिभाजः
संमोहयन्ति तरुणीर्भुवनत्रयेषु ॥४॥

ह्लींकारमेव तव नाम गृणन्ति वेदा
मातस्त्रिकोणनिलये त्रिपुरे त्रिणेत्रे ।
यत्संस्मृतौ यमभटादिभयं विहाय
दीव्यन्ति नन्दनवने सह लोकपालैः ॥५॥

हन्तुः पुरामधिगलं परिपूर्यमाणः
क्रूरः कथं नु भविता गरलस्य वेगः ।
आश्वासनाय किल मातरिदं तवार्धं
देहस्य शश्वदमृताप्लुतशीतलस्य ॥६॥

सर्वज्ञतां सदसि वाक्पटुतां प्रसूते
देवि त्वदङ्घ्रि सरसीरुहयोः प्रणामः ।
किञ्च स्फुरन्मुकुटमुज्ज्वलमातपत्रं
द्वे चामरे च वसुधां महतीं ददाति ॥७॥

कल्पद्रुमैरभिमतप्रतिपादनेषु
कारुण्यवारिधिभिरम्ब भवत्कटाक्षैः ।
आलोकय त्रिपुरसुन्दरि मामनाथं
त्वय्येव भक्तिभरितं त्वयि दत्तदृष्टिम् ॥८॥

हन्तेतरेष्वपि मनांसि निधाय चान्ये
भक्तिं वहन्ति किल पामरदैवतेषु ।
त्वामेव देवि मनसा वचसा स्मरामि
त्वामेव नौमि शरणं जगति त्वमेव ॥९॥

लक्ष्येषु सत्स्वपि तवाक्षिविलोकनाना-
मालोकय त्रिपुरसुन्दरि मां कथञ्चित् ।
नूनं मयापि सदृशं करुणैकपात्रं
जातो जनिष्यति जनो न च जायते च ॥१०॥

ह्लीं ह्लीमिति प्रतिदिनं जपतां जनानां
किं नाम दुर्लभमिह त्रिपुराधिवासे ।

मालाकिरीटमदवारणमाननीयां-
स्तान् सेवते मधुमती स्वयमेव लक्ष्मीः ॥११॥
सम्पत्कराणि सकलेन्द्रियनन्दनानि
साम्राज्यदानकुशलानि सरोरुहाक्षि ।
त्वद्वन्दनानि दुरितौघहरोद्यतानि
मामेव मातरनिशं कलयन्तु नान्यम् ॥१२॥
कल्पोपसंहरणकल्पिततताण्डवस्य
देवस्य खण्डपरशोः परमेश्वरस्य ।
पाशाङ्कुशेक्षवशरासनपुष्पबाणा
सा साक्षिणी विजयते तव मूर्तिरेका ॥१३॥
लग्नं सदा भवतु मातरिदं तवार्धं
तेजः परं बहुलकुङ्कुमपङ्कशोणम् ।
भास्वत्किरीटममृतांशुकलावतंसं
मध्ये त्रिकोणमुदितं परमामृतार्द्रम् ॥१४॥
ह्रींकारमेव तव धाम तदेव रूपं
त्वन्नाम सुन्दरि सरोजनिवासमूले ।
त्वत्तेजसा परिणतं जगदादि मूलं
सङ्गं तनोतु सरसीरुहसङ्गमस्य ॥१५॥
ह्रींकारत्रयसम्पुटेन महता मन्त्रेण सन्दीपितं
स्तोत्रं यः प्रतिवासरं तव पुरो मातर्जपेन्मन्त्रवित् ।
तस्य क्षोणिभुजो भवन्ति वशगा लक्ष्मीश्चिरस्थायिनी
वाणीनिर्मलसूक्तिभारभरिता जागर्ति दीर्घं वपुः ॥१६॥
ओं गणेशग्रहनक्षत्रयोगिनीं राशिरूपिणीम् ।
देवीं मन्त्रमयीं नौमि मातृकां पीठरूपिणीम् ॥१॥
प्रणमामि महादेवीं मातृकां परमेश्वरीम् ।
कालहल्लोहलोल्लोलकलनाशमकारिणीम् ॥२॥
यदक्षरैकमात्रेऽपि संसिद्धे स्पर्धते नरः ।
रविताक्ष्र्येन्दुकन्दर्पशङ्करानलविष्णुभिः ॥३॥

यदक्षरशशिज्योत्स्नामण्डितं भुवनत्रयम् ।
वन्दे सर्वेश्वरीं देवीं महाश्रीसिद्धमातृकाम् ॥४॥

यदक्षरमहासूत्रप्रोतमेतज्जगत्त्रयम् ।
ब्रह्माण्डादिकटाहान्तं तां वन्दे सिद्धमातृकाम् ॥५॥

यदेकादशमाधारं बीजं कोणत्रयोद्भवम् ।
ब्रह्माण्डादिकटाहान्तं जगदद्यापि दृश्यते ॥६॥

अकचादिटतोन्नद्धपयशाक्षरवर्गिणीम् ।
ज्येष्ठाङ्गबाहुहृत्पृष्ठकटिपादनिवासिनीम् ॥७॥

तामीकाराक्षरोद्धारां सारात् सारां परात् पराम् ।
प्रणमामि महादेवीं परमानन्दरूपिणीम् ॥८॥

अद्यापि यस्या जानन्ति न मनागपि देवताः ।
केयं कस्मात् क्व केनेति सरूपारूपभावनाम् ॥९॥

वन्दे तामहम् क्षय्यां क्षकाराक्षररूपिणीम् ।
देवीं कुलकलोल्लासप्रोल्लसन्तीं परां शिवाम् ॥१०॥

वर्गानुक्रमयोगेन यस्यां मात्रष्टकं स्थितम् ।
वन्दे तामष्टवर्गोत्थमहासिद्धचष्टकेश्वरीम् ॥११॥

कामपूर्णजकाराख्यश्रीपीठान्तर्निवासिनीम् ।
चातुराज्ञाकोशमूलां नौमि श्रीत्रिपुरामहम् ॥१२॥

इति द्वादशभिः श्लोकैः स्तवनं सर्वसिद्धिकृत् ।
देव्यास्त्वखण्डरूपायाः स्तवनं तव तथ्यतः ॥

भूमौ स्खलितपादानां भूमिरेवावलम्बनम् ।
त्वयि जातापराधानां त्वमेव शरणं शिवे ॥

जपो जल्पः शिल्पं सकलमपि मुद्राविरचना
गतिः प्रादक्षिण्यक्रमणमशनाद्याहुतिविधिः ।
प्रणामः संवेशः सुखमखिलमात्मार्पणदृशा
सपर्यापर्यायस्तव भवतु यन्मे विलसितम् ॥

पिता माता भ्राता गुरुरथ सुहृद्बान्धवजनः
प्रभुस्तीर्थं कर्माविकलमिह चामुत्र च हितम् ।
विशुद्धा विद्या वा पदमपि च तत्प्राप्यमसि मे
त्वमेव श्रीमातः स्वपिमि गतशङ्कः सुखतमः ॥

दृशा द्राघीयस्या दरदलितनीलोत्पलरुचा
दवीयांसं दीनं स्नपय कृपया मामपि शिवे ।
अनेनायं धन्यो भवति न च ते हानिरियता
वने वा हर्म्ये वा समकरनिपातो हिमकरः ।।

हे सद्रूपिणि हे चिदग्निरुदये हे कामराजप्रिये
हे भण्डासुरहन्त्रि हेऽद्भुतनिधे हेऽनङ्गसञ्जीविनि ।
हे विश्वप्रसवित्रि हे सकरुणे हे दीनरक्षामणे
हे श्रीमल्ललिताम्ब हे परशिवे मां पाहि डिम्भं निजम् ।।

नमो हेमाद्रिस्थे शिवसति नमः श्रीपुरगते
नमः पद्माटव्यां कुतुकिनि नमो रत्नगृहगे ।
नमः श्रीचक्रस्थेऽखिलमयि नमो बिन्दुनिलये
नमः कामेशाङ्कस्थितिमति नमस्तेऽम्ब ललिते ।।

जय जय जगदम्ब भक्तवश्ये जय जय सान्द्रकृपावशान्तरङ्गे ।
जय जय निखिलार्थदानशौण्डे जय जय हे ललिताम्ब
चित्सुखाब्धे ।।

षडङ्गदेवतां नित्या दिव्याद्योधत्रयीगुरून् ।
नमाम्यायुधदेवीश्च शक्तीश्चावरणस्थिताः ।।
पद्मवत्यम्बिकाऽधीनवामाङ्काय शिवात्मने ।
भासुरानन्दनाथाय मम श्रीगुरवे नमः ।।
सुन्दर्यम्बासमाश्लेषसुखिताय नमो नमः ।
प्रकाशानन्दनाथाय गुरवे परमाय मे ।।
मिश्राम्बानयनोल्लासविश्रान्तमनसे नमः ।
आनन्दानन्दनाथाय गुरवे परमेष्ठिने ।।
यदियं श्रीगुरुस्तोत्रं स्वस्वरूपोपलक्षणम् ।।
बालभावानुसारेण ममेदं हि विचेष्टितम् ।
मातृवात्सल्यसदृशं त्वया देवि विधीयताम् ।।

एवामादिभिरन्याभिश्च यथाऽवकाशं स्तुतिभिरखिललोकमातरमभिष्टुत्य शक्तिं पूजयेत् ।

## सुवासिन्याः पूजनम्

यथा प्राङ्निमन्त्रितां गौरीरूपिणीं दीक्षितां सुवासिनीं प्रक्षालित पादामासन उपवेशयेत् । सा चेद्दीक्षिता तदा ऐं ह्रीं श्रीं ऐं क्लीं सौः त्रिपुरायै नमः इमां शक्तिं पवित्रीकुरु मम शक्तिं कुरु स्वाहा इत्यभि-षेकमन्त्रपूर्वकं सामान्यसलिलेन त्रिः शक्तिं सम्प्रोक्ष्य ४ ओं शान्तिरस्तु शिवञ्चास्तु प्रणश्यत्वशुभञ्चान्यत् यतएवागतं पापं तच्चैव प्रतिगच्छतु इत्युच्चार्य तस्याः कर्णे हृल्लेखां जपेत् । अथ तां देवतारूपां विभाव्य ४ ऐं क्लीं सौः शक्त्यै अमुकं समर्पयामि इति मन्त्रेण हरिद्राकुङ्कुम-चन्दनपट्टवासःपुष्पधूपदीपनैवेद्यताम्बूलानि वसनाभरणानि च दद्यात् । समस्तप्रकटप्रकटयोगिनीत्यादिसमष्टिमन्त्रेण श्रीदेव्यै आवरणदेवता-भ्यश्च दत्तपुष्पाञ्जल्या तस्याः करे विशेषार्घ्यादमृतं पात्रान्तरे कृत्वा समर्पयेत् । साप्युत्थाय तदादाय शिरसि गुरुपादुकामन्त्रेण गुरुं त्रिरिष्ट्वा हृदि देवीञ्च सन्तर्प्य मूलेन गुर्वाज्ञां गृहीत्वा मूलान्ते सर्वतत्त्वं शोधयामि नमः स्वाहा इति मन्त्रेण सर्वतत्त्वं संशोधयेत् । ततश्च तत्स्वीकुर्य्यात् । पश्चात्तां भोजयित्वा ताम्बूलदक्षिणादिभिः सन्तर्प्य विसृजेत् ।

## तत्त्वशोधनम्

४ क—५ प्रकृत्यहङ्कारबुद्धिमनस्त्वक्चक्षुःश्रोत्रजिह्वाघ्राणवा-क्पाणिपादपायूपस्थशब्दस्पर्शरूपरसगन्धाकाशवायुवह्निसलिलभूम्यात्म-ना अं+अः ४ क–५ आत्मतत्त्वेन आणवमलशोधनार्थं स्थूलदेहं परिशोधयामि जुहोमि स्वाहा । आत्मा मे शुध्यतां विरजा विपाप्मा भूयासँ स्वाहा ।

४ ह–६ मायाकलाऽविद्यारागकालनियतिपुरुषात्मना कं+मं ४–ह ६ विद्यातत्त्वेन मायिकमलशोधनार्थं सूक्ष्मदेहं परिशोधयामि जुहोमि स्वाहा । अन्तरात्मा मे शुध्यतां जोतिरहं विरजा विपाप्मा भूयासँ स्वाहा ।

४ स–४ शिवशक्तिसदाशिवेश्वरशुद्धविद्यात्मना यं+क्षं ४–४

शिवतत्त्वेन कार्मिकमलशोधनार्थं कारणदेहं परिशोधयामि जुहोमि स्वाहा। परमात्मा मे शुद्धयतां ज्योतिरहं विरजा विपाप्मा भूयासँ स्वाहा।

४ मूलं प्रकृत्यहङ्कारबुद्धिमनस्त्वक्चक्षुःश्रोत्रजिह्वाघ्राणवाक्पाणिपादपायूपस्थशब्दस्पर्शरूपरसगन्धाकाशवायुवह्निसलिलभूमिमायाकलाऽविद्यारागकालनियतिपुरुषशिवशक्तिसदाशिवेश्वरशुद्धविद्यात्मना अं आं +लं क्षं मूलं सर्वतत्वेन सर्वदेहं सर्वदेहाभिमानिनं जीवात्मानं परिशोधयामि जुहोमि स्वाहा। ज्ञानात्मा मे शुद्धयतां ज्योतिरहं विरजा विपाप्मा भूयासँ स्वाहा।

४ आर्द्रं ज्वलति ज्योतिरहमस्मि। ज्योतिर्ज्वलति ब्रह्माहमस्मि। योऽहमस्मि ब्रह्माहमस्मि। अहमस्मि ब्रह्माहमस्मि। अहमेवाहं मां जुहोमि स्वाहा।

इति (गुरौ सन्निहिते होष्यामि इति सम्प्रार्थ्य गुरोरनुज्ञां लब्ध्वा) चिदग्नौ होमबुद्धया जुहुयात्। ततः पात्रं प्रक्षाल्य तत्र सुवर्णपुष्पाक्षतान्निक्षिप्य,

**४ देवनाथ गुरो स्वामिन् देशिक स्वात्मनायक।**
**त्राहि त्राहि कृपासिन्धो पात्रं पूर्णतरं कुरु॥**

इति गुरवे समर्पयेत्। असन्निहिते गुरौ स्वशिरसि पात्रं निधाय आत्मपात्रमण्डले निक्षिपेत्।

## देवतोद्वासनम्

ततः सामान्योदकात् किञ्चिदादाय—

**साधु वाऽसाधु वा कर्म यद्यदाचरितं मया।**
**तत् सर्वं कृपया देवि गृहाणाराधनं मम॥**

इति देव्या वामहस्ते पूजां समर्प्य शङ्खमुद्धृत्य देव्युपरि त्रिः परिभ्राम्य तज्जलं हस्ते समादाय सामयिकानात्मानं च मूलेन प्रोक्ष्य शङ्खं प्रक्षाल्य निदध्यात्। ततो मूलेन तीर्थनिर्माल्ये स्वीकृत्य,

**ज्ञानतोऽज्ञानतो वाऽपि यन्मयाऽऽचरितं शिवे।**
**तव कृत्यमिति ज्ञात्वा क्षमस्व परमेश्वरि॥**

इति क्षमाप्य सर्वासामावरणदेवतानां श्रीदेव्यङ्गे विलयं विभाव्य, खेचरीं बद्ध्वोद्वास्य तेजोरूपेण परिणतां श्रीदेवीं पूर्ववत् हृदयं नीत्वा तत्र च मूर्तिं पञ्चधोपचर्य पुनरात्माभिन्नसंविद्रूपेण विभावयेदिति विसर्जनम्। ततः शान्तिस्तवः॥

**सम्पूजकानां परिपालकानां यतेन्द्रियाणाञ्च तपोधनानाम्।**
**देशस्य राष्ट्रस्य कुलस्य राज्ञां करोतु शान्तिं भगवान् कुलेशः॥**

**नन्दन्तु साधककुलान्यणिमादिसिद्धाः**
**शापाः पतन्तु समयद्विषि योगिनीनाम्।**
**सा शाम्भवी स्फुरतु काऽपि ममाऽप्यवस्था**
**यस्यां गुरोश्चरणपङ्कजमेव लभ्यम्॥**
**शिवाद्यवनिपर्यन्तं ब्रह्मादिस्तम्बसंयुतम्।**
**कालाग्न्यादिशिवान्तं च जगद्यज्ञेन तृप्यतु॥**

इत्यादि शान्तिश्लोकान् पठित्वा, विशेषार्घ्यविसर्जनं कुर्यात्।

विशेषार्घ्यपात्रं मूलेनामस्तकमुद्धृत्य तत् क्षीरं पात्रान्तरेणादाय—"आर्द्रं ज्वलति ज्योतिरहमस्मि। ज्योतिर्ज्वलति ब्रह्माहमस्मि। योऽहमस्मि ब्रह्माहमस्मि। अहमस्मि ब्रह्माहमस्मि। अहमेवाहं मां जुहोमि स्वाहा" इति मन्त्रेण आत्मनः कुण्डलिन्यग्नौ हुत्वा शेषं प्रियशिष्याय दत्वा तत्पात्रमन्यानि च हविश्शेषप्रतिपत्तिपात्राणि प्रक्षाल्याग्नौ प्रताप्यावस्थापयेत्।

अथ यथाशक्ति ब्राह्मणान् सुवासिनीश्च भोजयित्वा, स्वयमपि भुञ्जीत इति नित्यक्रमविधिः॥

## कृत्वर्थनियमः

कृष्णाष्टमीतच्चतुर्दश्यमापूर्णिमासंक्रान्तिसंज्ञेषु पर्वसु पञ्चसु सविशेषैः साधनैः आराधयेत्। तत्प्रकारस्तु नैमित्तिकप्रकरणे वक्ष्यते। नित्यनैमित्तिकक्रमौ च शिष्यसुतादिभिरपि कारयितुं शक्यते।

श्रीललितोपासको नेक्षुखण्डं भक्षयेत्। न दिवा स्मरेद्वार्तालीम्। न जुगुप्सेत सिद्धद्रव्याणि। न कुर्यात् स्त्रीनिष्ठुरताम्। वीरस्त्रियं न गच्छेत्। न तां हन्यात्। न तद्द्रव्यमपहरेत्। नात्मेच्छया म-

पञ्चकमुररीकुर्यात् । कुलभ्रष्टैः सह नासीत । न बहु प्रलपेत् । योषितं सम्भाषमाणामप्रतिसम्भाषमाणो न गच्छेत् । कुलपुस्तकानि गोपायेत् । एते क्रत्वर्थनियमाः अकरणे क्रतुवैगुण्यापादकाः साधकेनावश्यमनुष्ठेयाः । अन्यांश्च दीक्षाक्रमोक्तान् सामायिकानामाचाराननुतिष्ठेत् । अनिशमात्मानं कामकलात्मकं श्रीदेवीरूपं भावयेत् । एवं वर्तमानस्य कुलनिष्ठस्य सर्वतः कृतकृत्यता । शरीरविमोके च श्वपचगृहकाश्योर्नान्तिरम् । स एव जीवन्मुक्तः सुखी विहरेदिति ।।

## श्रीचक्रप्रतिष्ठापनविधिः

दीक्षाप्रकरणोक्ते शुभे दिवसे कृताह्निकः साधको गणपतिमाराध्य ब्राह्मणैः स्वस्ति वाचयित्वा आचम्य प्राणानायम्य देशकालौ संकीर्त्य अमुकगोत्रोऽमुकशर्मवर्मादिरहं महात्रिपुरसुन्दरीमाराधयिष्यन् श्रीचक्रराजप्रतिष्ठापनं करिष्य इति दुग्धदधिघृतशकृन्मूत्रात्मकं पञ्चगव्यमानीय सम्मिश्र्य हौं इति मन्त्रेण अष्टोत्तरशतवारानभिमन्त्र्य तत्र प्रणवेन यन्त्रं निक्षिप्य ततः उद्धृत्य पात्रान्तरे निधाय, मिश्रितेन गोदुग्धदधिघृतमधुशर्करात्मकेन पञ्चामृतेन संस्नाप्य धूपयेत् । अथ प्रत्येकं दुग्धादिभिः क्रमेण अन्तरान्तरा धूपनपूर्वकं स्नपयित्वा पुनर्मिश्रितैश्च तैः स्नपयेत् । ततोऽष्टासु दिक्षु शालितण्डुलपुञ्जोपरि निहितैः नूतनवसनवेष्टितैः गन्धपुष्पार्चितैः कुङ्कुमरोचनाचन्दनकस्तूरीसुरभिलशीतलसलिलपूर्णैः कुशाग्रेण स्पृष्ट्वा मूलेनाष्टोत्तरशतवारानभिमन्त्रितैः सौवर्णादिमार्त्तिकान्तान्यतमैरष्टभिः कलशैरभिषिञ्चेत् । इह सर्वमपि पञ्चगव्यादिकं स्नानं मूलमन्त्रकरणकमेव । अथ यन्त्रं धौतेन वाससा परिमृज्य पीठे निधाय कुशाग्रैः स्पृशन्——ऐं ह्रीं श्रीं अों यन्त्रराजाय विद्महे महायन्त्राय धीमहि । तन्नो यन्त्रः प्रचोदयात् इति यन्त्रगायत्रम् अष्टोत्तरशतवारानावर्त्यात्मनो भूतशुद्ध्यादिमातृकान्यासान्तं कृत्वा यन्त्रं करेण संस्पृश्य प्राणप्रतिष्ठां कुर्यात् । यथा——

अस्य श्रीयन्त्रराजस्य प्राणप्रतिष्ठामहामन्त्रस्य ब्रह्मविष्णुमहेश्वरा ऋषयः, ऋग्यजुस्सामाथर्वाणि छन्दांसि, चैतन्यं देवता । आं

बीजम्, ह्रीं शक्तिः, क्रों कीलकम् मम श्रीचक्रप्राणप्रतिष्ठायै जपे विनियोगः।

ऐं ह्रीं श्रीं अं कं खं गं घं ङं पृथिव्यप्तेजोवाय्वाकाशात्मने आं अङ्गुष्ठाभ्यां नमः।

३ इं चं छं जं झं ञं शब्दस्पर्शरूपरसगन्धात्मने ईं तर्जनीभ्यां नमः।

३ उं टं ठं डं ढं णं श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मने ऊँ मध्यमाभ्यां नमः।

३ एं तं थं दं धं नं वाक्पाणिपादपायूपस्थात्मने ऐं अनामिकाभ्यां नमः।

३ ओं पं फं बं भं मं वचनादानविहरणविसर्गानन्दात्मने औं कनिष्ठिकाभ्यां नमः।

३ अं यं रं लं वं शं षं सं हं लं क्षं मनोबुद्ध्यहङ्कारचित्तान्तःकरणात्मने अः करतलकरपृष्ठाभ्यां नमः। एवं हृदयादिन्यासः।

ध्यानम्—

**रक्ताम्बोधिस्थपोतोल्लसदरुणसरोजाधिरूढा कराब्जैः**
**पाशं कोदण्डमिक्षूद्भवमलिगुणमप्यङ्कुशं पञ्चबाणान्।**
**बिभ्राणाऽसृक्कपालं त्रिणयनलसिता पीनवक्षोरुहाढ्या**
**देवी बालार्कवर्णा भवतु सुखकरी प्राणशक्तिः परा नः॥**

ऐं ह्रीं श्रीं ओं आं ह्रीं क्रों यं रं लं वं शं षं सं हौं हं सः श्रीचक्रस्य प्राणाः इह प्राणाः, ३ ओं...सः श्रीचक्रस्य जीव इह स्थितः, ३ ओं ...सः श्रीचक्रस्य सर्वेन्द्रियाणि, ३ ओं...सः श्रीचक्रस्य वाङ्मनश्चक्षुःश्रोत्रजिह्वाघ्राणप्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा इति।

यन्त्रान्तरप्राणप्रतिष्ठायां तत्तन्नाम्न ऊहः कार्यः। अथ तत्र श्रीक्रमोक्तेन विधिना देवीमावाह्याभ्यर्च्य यन्त्रं कुशाग्रैः स्पृशन् मूलमष्टोत्तरसहस्रं शतं वा वारानावर्त्य होमप्रकरणोक्तेन क्रमेणाष्टोत्तरशतमाज्याहुतीः मूलेन हुत्वा सम्पाताज्यं मध्येमध्ये यन्त्रे अवनीय सव्यञ्जनेनान्नेन सर्वभूतबलिं प्रदाय होमशेषं समाप्य गुरवे

सुवर्णश‍ृङ्गालङ्कृतां गां वसनाभरणानि च प्रदाय देवीमुद्वास्य कुमारीं योगिनीं ब्राह्मणांश्च भोजयेत्। इमाञ्च यन्त्रप्रतिष्ठां गुर्वादिना वा कारयेदिति वामकेश्वरतन्त्रीयो यन्त्रप्रतिष्ठापन विधिः।

## होमप्रकरणम्

तत्र पूजामण्डपस्य ईशानभागे चतुरस्रं कुण्डम् अथवा हस्तायाम-मङ्गुष्ठोन्नतं स्थण्डिलं कृत्वा सामान्यार्घ्योदकेन प्रोक्ष्य, उदक्संस्थाः प्राचीस्तिस्रो रेखाः तदुपरि प्राक्संस्था उदीचीश्च लिखित्वा तासु क्रमेण—ऐं ह्रीं श्रीं ऐं क्लीं सौः ब्रह्मणे नमः, यमाय, सोमाय, रुद्राय, विष्णवे, इन्द्राय नमः, इति गन्धाक्षतपुष्पैरभ्यर्च्य,

ऐं ह्रीं श्रीं सहस्रार्चिषे हृदयाय नमः, स्वस्तिपूर्णाय शिरसे स्वाहा, उतिष्ठपुरुषाय शिखायै वषट्, धूमव्यापिने कवचाय हुम्, सप्तजिह्वाय नेत्रत्रयाय वौषट्, धनुर्धराय अस्त्राय फट् इति स्वाङ्गेषु षडङ्गं न्यसेत्। तेनैव षडङ्गेन-अग्नीशासुरवायव्येषु मध्ये दिक्षु च कुण्ड-मभ्यर्च्य, तत्राष्टकोणषट्कोणत्रिकोणात्मकाग्निचक्रं प्रवेशरीत्या विलिख्य त्रिकोणे दिगष्टकं विभाच्य तत्र स्वाग्रादिप्रादक्षिण्येन दिक्षु मध्ये च क्रमात्—

ऐं ह्रीं श्रीं पीतायै नमः, श्वेतायै, अरुणायै, कृष्णायै, धूम्रायै, तीव्रायै, स्फुलिङ्गिन्यै, रुचिरायै, ज्वालिन्यै नमः इति पीठशक्तीः समर्च्य पीठमध्य एव—

ऐं ह्रीं श्रीं तं तमसे नमः, रं रजसे, सं सत्वाय, आं आत्मने, अं अन्तरात्मने, पं परमात्मने, ज्ञां ज्ञानात्मने नमः इत्युपर्युपरि पूजयेत्। ततः तत्र त्रिकोणे ऐं ह्रीं श्रीं ह्रीं वागीश्वरी-वागीश्वराभ्यां नमः इति मन्त्रेण जनिष्यमाणस्य वह्नेः पितरौ वागीश्वरीवागीश्वरौ सम्पूज्य, तयोर्मिथुनीभावं भावयित्वा, अरणेः सूर्यकान्ताद्वा वह्निमुत्पाद्य द्विजगृहाद्वा आनीय मृत्पात्रे ताम्रपात्रे वा अग्निम् आग्नेय्यां नैर्ऋत्यां वा दिशि निधाय तस्मात्क्रव्यादांशमेक-मग्निशकलं नैर्ऋत्यां निरस्य, मूलेन निरीक्षणप्रोक्षणेणास्त्रेण कुशैः

ताडनमवगुण्ठनामृतीकरणे चेत्येतैः विशोध्य, ओं वैश्वानर जातवेद इहावह लोहिताक्ष सर्वकर्माणि साधय स्वाहेति मूलाधारोद्गतं संविदग्निं ललाटनेत्रद्वारा निर्गमय्य तं बाह्याग्नियुक्तं वागीश्वरबीजस्य वागीश्वरीयोन्यां प्रवेशबुद्धया वह्निचक्रे पातयेत्। ततः कवचाय हुँ इति मन्त्रेण इन्धनैराच्छाद्य,

**ऐं ह्रीं श्रीं अग्निं प्रज्वलितं वन्दे जातवेदो हुताशनम्।**
**सुवर्णवर्णममलं समिद्धं विश्वतो मुखम्॥**

इत्युपस्थाय,

३ उतिष्ठ पुरुष हरित पिङ्गल लोहिताक्ष सर्वकर्माणि साधय मे देहि दापय स्वाहा इति वह्निमुत्थाप्य, ३ चित्पिङ्गल हन हन दह दह पच पच सर्वज्ञ आज्ञापय स्वाहा इति प्रज्वाल्य, वागीश्वरीगर्भे धृतं ध्यात्वा, ऐं ह्रीं श्रीं ऐं क्लीं सौः एं नमः अस्य होमाग्नेः पुंसवनकर्म कल्पयामि नमः। तथा अस्य होमाग्नेः सीमन्तकर्म, जातकर्म, श्रीललिताग्निरिति नाम्ना नामकरणकर्म कल्पयामि नमः। एवं तत्तत्कर्मसु वह्नेः तत्तद्देवतानाम योज्यम्। अस्य होमाग्नेरिति पदस्य एतावत्पर्यन्तमनुवृत्तिः, इतः परम् ललिताग्नेरिति। ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं नमः श्रीललिताग्नेः अन्नप्राशनकर्म कल्पयामि नमः, चौलकर्म, उपनयनकर्म, गोदानकर्म, विवाहकर्म कल्पयामि नमः इति तत्तत्कर्माणि भावनया विदध्यात्। ततः सामान्य जलेन परिषेचनम्, प्रागग्रैरुदगग्रैश्च कुशैः परिस्तरणम्, त्रिभिः परिधिभिः परिधानञ्च कृत्वा,

**त्रिणयनमरुणाप्ताबद्धमौलिं सुशुक्लां-**
**शुकमरुणमनेकाकल्पमम्भोजसंस्थम्।**
**अभिमतवरशक्ति स्वस्तिकाभीतिहस्तं**
**नमत कनकमालालङ्कृतांसं कृशानुम्॥**

इति ध्यायेत्। शारदातिलके—

**वैश्वानरं स्थितं ध्यायेत् समिद्धोमेषु देशिकः।**
**शयानमाज्यहोमेषु निषण्णं शेषवस्तुषु॥**

इति ध्यानविशेष उक्तः। अथाष्टकोणे स्वाग्रादि प्रादक्षिण्येन——

ऐं ह्लीं श्रीं जातवेदसे नमः, सप्तजिह्वाय, हव्यवाहनाय, अश्वोदराय, वैश्वानराय, कौमारतेजसे, विश्वमुखाय, देवमुखाय नमः इति षट्कोणे च पूर्ववत् षडङ्गान्यभिपूज्य, त्रिकोणे——ओं वैश्वानर जातवेद इहावह लोहिताक्ष सर्वकर्माणि साधय स्वाहा इति मन्त्रेणाग्निमर्चयेत्। अथाज्यं मूलेन सप्तवारमभिमन्त्रणेन संशोध्य पुरतो दर्भेषु निधाय स्रुवञ्च मूलेन प्रक्षाल्य तदुत्तरतो निवेश्याग्नि पुष्पाक्षतैरालङ्कृत्य स्रुवेण आज्यमादाय,

ऐं ह्लीं श्रीं हिरण्यायै नमः स्वाहा। हिरण्याया इदं न मम। कनकायै, रक्तायै, कृष्णायै, सुप्रभायै, अतिरक्तायै, बहुरूपायै नमः स्वाहा। बहुरूपाया इदं न मम इति अग्नेः सप्तजिह्वास्वेकैकामाज्याहुतिं कुर्यात् नमोऽन्ताम्। 'पादुकाऽन्तानिति' सूत्रं तु प्रकरणान्तरमन्त्रान्तिमनमःपदापोहकं न तु वह्निजिह्वामन्त्रनमसः, अन्यत्र विनियोगादर्शनात्।

जिह्वास्थानानि तु——

**रुद्रेन्द्रवह्निमांसादवरुणानिलदिग्गताः।**
**हिरण्याद्याः क्रमान्मध्ये बहुरूपा व्यवस्थिता ॥ इति ॥**
**बहुरूपाख्यजिह्वायां होमः सर्वार्थसाधकः।**
**इतरासु हुनेत्क्रूरकर्मस्वभिमतेषु च ॥ इति कादिमते ॥**

ततः, ऐं ह्लीं श्रीं वैश्वानर जातवेद इहावह लोहिताक्ष सर्वकर्माणि साधय स्वाहा।

३ ओं उत्तिष्ठ पुरुष हरित पिङ्गल लोहिताक्ष सर्वकर्माणि साधय मे देहि दापय स्वाहा।

३ ओं चित्पिङ्गल हन हन दह दह पच पच सर्वाज्ञाज्ञापय स्वहा।

इत्यादिभिः प्रागुक्तैः त्रिभिर्मन्त्रैः अग्नेस्तिस्र आहुतीः जुहुयात्।

अथ अग्नेर्मध्यभागे स्थितायां दक्षिणोत्तरायतायां बहुरूपाख्य जिह्वायमावाहनमन्त्रेण——

ऐं ह्लीं श्रीं ह्स्रैं ह्स्क्लीं ह्स्रौः

महापद्मवनान्तःस्थे कारणानन्दविग्रहे ।
सर्वभूतहिते मातरेह्येहि परमेश्वरि ।।

इति श्रीदेवीमावाह्य उपचारमन्त्रैः गन्धादीन् पञ्चोपचारानाचर्य प्रथमम् अङ्गदेवीनित्यौघत्रयावरणदेवताचक्रेश्वरीणाम् एकैकामाज्याद्यन्यतमाहुतिमुद्देशत्यागपूर्वं कृत्वा प्रधानदेवतायाश्च तथैव दशाहुतीर्जुहुयात् । पुरश्चरणादिहोमाहुतयस्तु उत्तरं कार्याः । तत्र नित्यासु चक्रेश्वरीषु अङ्गदेवीषु च तत्तन्मन्त्रान्ते चतुर्थ्यन्तं तत्तन्नामोत्तरं स्वाहापदप्रयोगः । वशिन्यादिष्वायुधेषु चोक्तमन्त्रगतं नमःशब्दमपोह्य स्वाहाशब्दयोजनम् । अवशिष्टेषु ओघत्रयाणिमादिषु दैवतेषु चतुर्थ्यन्तं तत्तन्नामोत्तरं स्वाहापदसम्बन्ध इति विशेषः । यथा—

ऐं ह्लीं श्रीं अं ऐं स क ल ह्लीं नित्यक्लिन्ने मदद्रवे सौः अं कामेश्वरीनित्यायै स्वाहा । कामेश्वरीनित्याया इदं न मम इत्यादि ।।

३ अं आं सौः त्रिपुरचक्रेश्वर्यै स्वाहा । त्रिपुरचक्रेश्वर्या इदं न मम इत्यादि ।

३ अं आं इं ईं उं ऊं ऋं ॠं लृं ॡं एं ऐं ओं औं अः ब्लूँ वशिनी वाग्देवतायै स्वाहा । वाशनीवाग्देवताया इदं न मम इत्यादि ।

३ द्रां द्रीं क्लीं ब्लूं सः सर्वजम्भनेभ्यो बाणेभ्यः स्वाहा । सर्वजम्भनेभ्यो बाणेभ्य इदं न मम इत्यादि ।

३ हृद्रयदेव्यै स्वाहा । हृदयदेव्या इदं न मम इत्यादि ।

३ परप्रकाशानन्दनाथाय स्वाहा । परप्रकाशानन्दनाथाय इदं न मम इत्यादि ।

३ अणिमासिद्धयै स्वाहा । अणिमासिद्धया इदं न मम इत्यादिरीत्येति ।।

प्रधानदेवताहोमे तु पञ्चदशनित्योत्तरं कामेश्वर्यादित्रितयान्ते त्रिपुराम्बोत्तरं प्रधानहोमदशके तदन्ते तस्या एव महाचक्रेश्वरीत्वेन पुनर्होमे चेत्येवं त्रयोदशसु होमेषु मूलमन्त्रान्ते ललितायै स्वाहा ललिताया इदं न मम इति विवेकः "न तत्र मन्त्रदेवताभेदः

